श्रीगोकुलेन्दुर्जयति ।

नित्यलीलास्थ-गोस्वामिवर्य-

श्री १०८ श्रीदेवकीनन्दनाचार्यचरणानां स्मारिका

ग्रन्थरत्नमाला

तस्याः

प्रथमं ग्रन्थरत्नं

# विद्वन्मण्डनम् ।

## द्वितीयो भागः ।

श्री १०८ श्रीगोस्वामि-श्रीविट्ठलेश्वर-प्रभुचरण-प्रणीतम् ।

( निष्कर्षः । )

चतुर्थपञ्चमपीठाधीश्वर-गोस्वामि-श्री १०८ श्रीवल्लभाचार्यचरणानां

विद्याविभागतो 'मोहमयी'स्थ 'निर्णयसागर'मुद्रणागारे

मुद्रापयित्वा प्रकाशितम् ।

सार्धरूप्यकम् ।

विद्वन्मण्डनम्—



नित्यलीलास्थपञ्चमपीठाधीश्वरश्रीमद्गोस्वामिश्रीदेवकीनन्दनाचार्यचरणाः ।

श्रीगोकुलेन्दुर्जयति ।

नित्यलीलास्थ-गोस्वामिवर्य-

श्री १०८ श्रीदेवकीनन्दनाचार्यचरणानां स्मारिका

ग्रन्थरत्नमाला

तस्याः

प्रथमं ग्रन्थरत्नं

# विद्वन्मण्डनम् ।

## द्वितीयो भागः ।

श्री १०८ श्रीगोस्वामि-श्रीविट्ठलेश्वर-प्रभुचरण-प्रणीतम् ।

( निष्कर्षः । )

चतुर्थपञ्चमपीठाधीश्वर-गोस्वामि-श्री १०८ श्रीवल्लभाचार्यचरणानां
विद्याविभागतो 'मोहमयी'स्थ 'निर्णयसागर'मुद्रणागारे
मुद्रापयित्वा प्रकाशितम् ।

श्रीवल्लभाब्दाः ४४९ । खिस्ताब्दाः १९२६ । विक्रमाब्दाः १९८३ ।

विद्वन्मण्डनम्—



गोस्वामिश्रीविट्ठलनाथप्रभुचरणाः ।



दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणाः ।

॥ श्रीगोकुलेन्दुर्जयति ॥

# सटीकविद्वन्मण्डनस्य

## संस्कृत-निष्कर्षः ।

प्रणमदमरमौलिशालिमालाविगलदमन्दमरन्दसान्द्रभावम् ।
पदयुगमभिवन्द्य गोकुलेन्दोर्लिखति यथामति मण्डनस्य भावम् ॥ १ ॥

### ग्रन्थारम्भसमर्थनम् ।

(१) **सिद्धान्ती**—अस्मिञ्जगति नानाऽनिष्टैः कष्टमनुभवतां जीवानां मोक्ष-हेतवे श्रुतिपुराणेषु ब्रह्म-स्वरूपस्य श्रवण-मनन-निदिध्यासनादयः कर्तव्यतया निर्दिश्यन्ते। अतो हेतोर्मुमुक्षवो ज्ञातुमिच्छन्ति, ब्रह्म-स्वरूपं कीदृगिति। परन्तु ब्रह्म-स्वरूपं केवलं श्रुतिपुराणानां श्रवणेनैव न ज्ञायते, यत एतेषु क्वचिन्निर्गुणमुच्यते, क्वचित् सगुणं च। अतोऽत्र विषये विचार-सञ्चारः कर्तुमुचितः।

### ब्रह्म निर्गुणं सगुणं वेति विचारः ।

(२) **पूर्वपक्षी**—ब्रह्म निर्गुणमिति तु निर्णीतमेव, यतः **'अस्थूलमनणु'** इत्यादिभिर्ब्रह्म-बोधिकाभिः श्रुतिभिर्ब्रह्मणि गुणा निषिध्यन्ते। आसां श्रुतीनां बाधं च **'सर्वकामः सर्वगन्धः सर्वरसः'** इत्याद्याः गुण-बोधिकाः श्रुतयः कर्तुं न शक्नुवन्ति, यतस्ता गुणानां बोधनाय गुणाधारभूतस्य ब्रह्मणो ज्ञानमपेक्षन्ते, तच्चैताभिर्ब्रह्मबोधिकाभिर्भवतीति ता गुण-बोधिका एतासामाश्रिताः। यश्च यस्याश्रितः स तदपेक्षया क्षीणबलो भवतीति न तस्य बाधाय बद्धपरिकरो भवितुमर्हति।

**सिद्धान्ती**—ब्रह्म-बोधिकाः श्रुतयो गुणाधारभूतं ब्रह्म-स्वरूपं वर्णयन्ति, गुण-बोधिकाश्च तस्मिन् ब्रह्म-स्वरूपे गुणान् बोधयन्ति। एवं द्विविधा अपि श्रुतयः स्वे स्वे विषये स्वतन्त्रा इति नासां परस्परं कश्चन विरोधः। अत एतासु परस्परमाश्रयाश्रयिभावं कल्पयित्वा ब्रह्म-बोधिकाः प्रबलाः, गुण-बोधिका निर्बला इति व्यवस्थापनं व्यर्थमेव।

**पूर्वपक्षी**—यदि द्विविधा अपि श्रुतयः स्वे २ विषये स्वतन्त्राः, समबलाश्च चेत्, ब्रह्म निर्गुणं वा सगुणं वेति किमपि न निश्चेष्यते, यतो ब्रह्म-बोधिका गुणान् निषेधन्ति, गुणबोधिका गुणान् कथयन्तीति विरोधात् परस्परेण परस्परस्य बाध एव भविष्यति। अतः पूर्वोक्तानुसारेण ब्रह्म-बोधिकाः प्रबलाः गुण-बोधिकाश्च निर्बला इति व्यवस्थया ब्रह्म निर्गुणमिति स्वीकरणं रमणीयमेव।

**सिद्धान्ती**—यथा गुण-बोधिकाः श्रुतयो गुणाधारभूतस्य ब्रह्मणो ज्ञानाय ब्रह्म-बोधिकाः श्रुतीराश्रयन्ते, तथा ब्रह्म-बोधिका अपि अपरिचितस्य निषेधो न भवितुमर्हतीति गुण-परिचयाय गुण-बोधिकाः श्रुतीराश्रयन्ते । अत एताः परस्पराश्रया इति समानबला एव । यदि त्वदुक्तरीत्या परस्परमेतासां विरोधश्चेद्, ब्रह्म निर्गुणं वा सगुणं वेति तु भूयोऽपि न निर्णेष्यते, प्रत्युत बौद्धाभिमतः शून्यवाद एव सिद्धो भविष्यति ।

**पूर्वपक्षी**—अभावास्तु सर्वेऽपि निषेध्य-सापेक्षा एव, परन्तु अभाव-बोधक-प्रमाणतो निषेध्य-बोधकं प्रमाणं प्रबलमिति तु संप्रति-पर्यन्तं न कुत्रापि केनापि मञ्जूरीकृतम् । यत एवं मञ्जूरीकृतेऽभाव-बोधक-प्रमाणस्य सर्वत्रैव निर्बलतयाऽभाव-बोध एवासम्भवं भजति । अतोऽत्र गुण-बोधिकाः श्रुतयो यद्यपि निषेध्यस्वरूपपरिचायिकास्तथाऽपि नैता गुणान् निषेधन्तीभ्यो ब्रह्म-बोधिकाभ्यः प्रबला इति कस्याप्यादर-भाजनं भवितुमर्हति ।

**सिद्धान्ती**—एतत्सबलनिर्बलभाव-कल्पनाऽपेक्षया तु ब्रह्म-बोधिका ब्रह्मणि लौकिक-गुणान् निषेधन्ति, गुण-बोधिकाश्चालौकिकगुणान् बोधयन्तीति व्यवस्था-स्वीकरणमेव रमणीयं प्रतिभाति ।

**पूर्वपक्षी**—एवंविधालौकिकगुण-कल्पने किमपि प्रमाणं नास्ति । यदि वेदः स्वोक्तान् गुणान् स्वयं न निषेद्धुं शक्नोतीत्यनुपपत्तिरेव कल्पने मूलं चेत् **'आत्मा वाऽरे द्रष्टव्य'** इत्यस्यां श्रुतावलौकिकं श्रवणमपि कल्प्यताम्, यतो **'यतो वाचो निवर्तन्त'** इत्येतया श्रुत्या वाग्निवृत्ति-कथनेन ब्रह्म-स्वरूपस्य श्रवणमपि निषिद्धमस्ति । यदीह वेदो ब्रह्म-स्वरूपस्य स्वयमेव श्रवणमुपदिश्य निषेद्धुं शक्नोति चेत्, सर्वकामत्व-सर्वगन्धत्वप्रभृतीन् गुणानपि ब्रह्मणि स्वयमेव बोधयित्वा निषेद्धुं शक्ष्यति ।

**सिद्धान्ती**—वस्तुतः प्रस्तुते भवतः किं वक्तुमभिप्रेतमिति न प्रतीमः । जगति किमपीदृशं वस्तु नास्ति, यदेकदैव परस्परविरुद्धं स्वीयं रूपद्वयं दर्शयितुं शक्नुयात् । घटपटप्रभृतीनि कतिपयवस्तून्येवंविधानि त्ववश्यं सन्ति, यानि समयभेदेन स्वीयानि नानारूपाणि दर्शयन्ति । यथा प्रथमं श्यामो घटः पाक-काले रक्ततां दर्शयति । परन्तु ब्रह्म सदैकरसमिति प्रथमं निर्गुणमपि पश्चात्सगुणतां भजत इति सर्वथा न संभवति । अतः श्रुतिर्ब्रह्मणि किमर्थं गुणान् बोधयति, किमर्थं च निषेधतीति प्रत्युत्तीर्यताम् ? । व्यर्थमेव तु श्रुतिरेवं कर्तुं न शक्नोति । वस्तुत एव ब्रह्मणि गुणा न सन्ति चेद्, बोधनीया एव न हि, येन प्रतिषेध-प्रयास एव न भवेत् ।

**पूर्वपक्षी**—जगत्कर्तृत्वादयो गुणा अविद्या-सम्बन्धेन ब्रह्मणि वसन्तीति गुण-बोधिकानां श्रुतीनां सगुणं ब्रह्म विषयः । यदा सगुणब्रह्मोपासनयोपासक-प्रज्ञा शुद्धा स्थिरा

च भवति, तदा निर्गुणब्रह्मण उपासनायां साक्षात्कारे च सारल्यं संपद्यते। यथा द्वितीया-शशी कृशतया शिशोर्न लोचन–गोचरो भवति, तदा तदीयदिशि समवस्थितस्य कस्यापि शाखिनः शाखा प्रथमं प्रदर्श्यते, ततस्तत्साहाय्येनानायासमचिरादेव चन्द्रदर्शनं भवति। अयमेव गुण–बोधिकानां श्रुतीनां निर्गुण–ब्रह्मण्युपयोगः । वस्तुतो ब्रह्मणि गुणस्पर्शो नास्त्येव।

## ब्रह्म सगुणमस्ति।

( ३ ) **सिद्धान्ती**—सगुणं निर्गुणं च ब्रह्म परस्परं भिन्नमभिन्नं वा ?। भिन्नं चेत्, त्वदभिमताद्वैत–विघातः। अभिन्नं चेद्, गुणबोधिकाः श्रुतयः सगुणं ब्रह्म वर्णयन्ति, न निर्गुणमित्यस्य कोऽर्थः ?।

**पूर्वपक्षी**—सगुणनिर्गुणब्रह्मणोर्भेदस्तु वर्तते, परन्त्ववास्तविकः, यतोऽविद्योपाधिकृतः —अविद्योपाधिसम्बन्धवशेन जगत्कर्तृत्वादयो गुणा ब्रह्मणि प्रतीयन्ते, तेनायं भेद उदयं लभते,—किन्त्वविद्या तत्कल्पितकर्तृत्वादयश्चासत्याः । अत एतत्कृतो भेदो न वास्तवो भवितुमर्हति। अत एव नाद्वैतविघातः।

**सिद्धान्ती**—श्रुतयः, सृष्टि–रचनायां ब्रह्म स्वतन्त्रमिति कथयन्ति, न तु सत्त्वादि-गुणानां जीव–कर्मणां वा स्वल्पामपि सहायतां स्वीकुर्वन्ति। अतोऽविद्या–सम्बन्धेन ब्रह्म जगद्रचयतीति भवन्तो मन्यन्ते चेत्, अविद्याब्रह्मणोरनादिभावतयाऽनादिभावस्य च नाशास्पर्शेन सर्वदा सृष्टि–दशैव वर्तिष्यते, प्रलयः कदापि न भविष्यति।

**पूर्वपक्षी**—सत्त्वरजस्तमांसि गुणा अविद्या–स्वरूपान्तर्गता एव। अतो यानि प्रमाण-वचनान्यविद्या–सहचरं ब्रह्म जगद्रचयतीति वदन्ति, तैरेषां गुणानामपि सृष्टि–रचनायां साहाय्यं स्वीकृतमेव।

एषु गुणेषु यदा रजोऽधिकीभवति, तदा ब्रह्मैवाजो भूत्वा प्रजां जनयति। यदा सत्त्वं विवर्द्धते, तदा विष्णुरूपेणावतीर्णं रक्षां करोति । यदा च तमः प्रबलतमप्रभावं भवति, तदा शिवस्वरूपेण प्रलयं कल्पयति। इदमेव **'सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरञ्चिहरेति संज्ञा'** इति भागव-तवचनेनोच्यते। अतः सार्वदिकसृष्टि–प्रलयाभावदोषयोर्न स्वल्पोऽपीह स्पर्शः।

**सिद्धान्ती**—सृष्टि–स्थिति–संहाराः क्रमेण भवन्तीति कारणीभूतानां रजःसत्त्वतमसामप्यभिवृद्धिः–प्रथमं रजसः, ततः सत्त्वस्य, तदनन्तरं च तमस इति क्रमेणैव स्वीक-रणीया। सा चेयं गुणानां जडतया स्वतः क्रमेण न भवितुमर्हतीति कश्चन क्रम–निया-मको निर्दिश्यताम्। यदि ब्रह्मण इच्छैव क्रमे कारणं चेत्, जगतः सृष्टि–स्थिति–संहा-रानपि ब्रह्मण इच्छैव संपादयिष्यतीति गुणानां किमावश्यकता।

किंच युष्माभिर्गुणानां क्रमिकाभिवृद्धौ ब्रह्मण इच्छा कारणमिति स्वीकर्तुमपि न शक्यते, यतो युष्मन्मते ब्रह्मैवाविद्या-परतन्त्रं सत्सृष्टिं करोति । अतस्तदीयवाञ्छायामपि क्रमेणातिशयाना: पूर्वोक्ताऽविद्या-गुणा एव हेतवो भवितुमर्हन्ति, न तु गुणाभिवृद्धौ तदीयवाञ्छा ।

**पूर्वपक्षी**—रज:पुरश्वरा अविद्या-गुणा: स्वभावत: स्वयमेवाविर्भूयाभिवर्द्धन्ते, न तु किमपि कारणमपेक्षन्ते ।

**सिद्धान्ती**—यद्येवं चेद्, ब्रह्म जगत्सृजतीति किमर्थं भवन्तो मन्यन्ते, एवंविध-स्वभावा अविद्या-गुणा एव प्रपञ्च-रचनायै पर्याप्स्यन्ति ।

किञ्च अविद्या-परतन्त्रं ब्रह्म जगत: कर्तृ इति परस्परं विरुध्यते, यत: 'स्वतन्त्र: कर्ता' इति सूत्रेण स्वतन्त्रमेव कर्तारं पाणिनिर्भणति ।

**पूर्वपक्षी**—नरेश्वराधीना अपि सैनिका युद्ध्यन्त इति लोकेऽसकृत् साक्षात्कुर्म:, पुनर्ब्रह्मैव कथमविद्याऽधीनं न कर्तृ इत्युच्यते ।

**सिद्धान्ती**—नरेशवशा अपि सैनिका: स्वे २ कार्ये स्वतन्त्रं चेष्टन्त इति स्वतन्त्रावस्थायामपि विलोकितमेषां कर्तृत्वम् । अत: परवश-दशायामपि तदङ्गीकर्तुं युज्यते। परन्तु ब्रह्म त्वविद्या-साहचर्येणैव सर्वं संपादयति, स्वतन्त्रं न किमपि । अत इदं कर्तृ भवितुमर्हतीति न केनापि श्रद्धातुं शक्यते ।

किंच 'अविद्योपाधि-परतन्त्रं ब्रह्म कर्तृ' इति वाक्यं अविद्योपाधि: कर्तेत्यर्थे विश्राम्यति । यथा 'घटाकाशश्चलतीति' वाक्यं घटश्चलतीत्यर्थे । अत एवं स्वीकारे ब्रह्मैव स्वतन्त्रं सर्वप्रपञ्चरचनाचातुरीधुरीणमिति घुष्यन्तीनां सर्वासामपि श्रुतीनां विरोध: ।

**पूर्वपक्षी**—वस्तुतोऽविद्योपाधिरेव प्रपञ्चं रचयति, परन्तु परमात्मोपासनायां जीवान् प्रवर्तयितुं परमात्मन: प्रशंसाऽपेक्ष्यते, एतदर्थं श्रुतयोऽविद्योपाधे: कर्तृत्वमुपचारेण ब्रह्मण्यारोप्य वर्णयन्ति । यथा केवलं सेनायां युद्ध्यमानायामपि मनुजा 'राजा युध्यत' इति कथयन्ति । अतो नात्र कोऽपि श्रुतिविरोधबाधासम्बन्ध-गन्ध: ।

**सिद्धान्ती**—नरेश्वरसेनयोरन्योन्यं सेव्यसेवकभावसम्बन्धोऽस्तीति सेना-सम्बद्धां युद्धक्रियां नरेश्वर आरोप्य मनुजा 'राजा युद्ध्यत' इति कथयन्तीति युक्तमेव, परन्तु ब्रह्मणा सह भावाज्ञान-रूपाया अविद्याया न कोऽपि सम्बन्ध इत्यविद्यायां विद्यमाना प्रपञ्च-रचना क्रिया न ब्रह्मण्यारोपयितुं शक्या । अतोऽविद्या-सम्बन्धेन ब्रह्म कर्तृ इति कथनं न कथमपि घटते ।

भावाज्ञानरूपाया अविद्याया ब्रह्मणा सह सम्बन्धो नास्तीति तु 'सदेव सौम्येदमग्र

आसी'दिति श्रुतिः प्रपञ्चोत्पत्तेः पूर्वं ब्रह्मभिन्नं किमपि नासीदिति कथयन्ती व्यक्तीकरोति । यद्यविद्या जगद्बीजं चेज्जगदुद्भवतः पूर्वमस्याः स्थितिरावश्यिकी, यतः कार्यतः पूर्वं सर्वत्र तद्बीजं तिष्ठत्येव । विद्यमानायां च तदानीमविद्यायां ब्रह्म–भिन्नं किमपि नासीदिति वक्तुं नेयं श्रुतिः शक्ता भवितुमर्हति ।

**पूर्वपक्षी**—उक्तश्रुतौ 'सत्'–शब्देनाविद्या–सहितं ब्रह्मोच्यत इत्यन्य–निषेधकेन 'एव'-पदेनाविद्याया निषेधो न कर्तुं शक्यते ।

**सिद्धान्ती**—'**ॐ–तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत**' इति गीतावचनेन 'सत्'–शब्दस्य शुद्धब्रह्मैवार्थ उच्यते, न त्वविद्या–युक्तं ब्रह्मेति, 'सदेवे'ति श्रुतावपि 'सत्'-शब्दस्याविद्या–युक्तं ब्रह्म नार्थो भवितुमर्हति ।

**पूर्वपक्षी**—'सत्'–शब्दस्य केवलं शुद्धं ब्रह्मैवार्थ इत्यङ्गीकृतेऽपि 'सदेवे'ति श्रुत्या ब्रह्म-भिन्नाया अविद्याया न निषेधः कर्तुं शक्यः, यतः सत्पदोत्तरवर्त्ति 'एव'पदं 'आसीद्' इति क्रियया संयुज्यते, न तु 'सत्'–पदेन । अतोऽस्याः श्रुतेरर्थः प्रपञ्चोत्पत्तितः पूर्वं ब्रह्मावश्यमासीदित्येव भवितुं क्षमो, न तु ब्रह्म–भिन्नं किमपि नासीदिति । यद्येवं न चेत्, श्रुतिः 'अग्रे'–पदेन ब्रह्म–भिन्नं कालं कथं कथयेत् ।

**सिद्धान्ती**—केवलं 'सदेव सौम्ये'ति श्रुतौ 'एव'–पदसम्बन्धपरिवर्तनेन न सृष्टेः प्राग् ब्रह्मातिरिक्तस्य वस्तुनः सत्ता प्रमाणीकर्तुं शक्यते । यतः '**सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्**' इत्याद्या अन्या अपि नाना श्रुतयः सृष्टि–पूर्वसमये ब्रह्मातिरिक्तवस्तु–सत्तां निषेधन्ति । अत इदं परिवर्तनं व्यर्थमेव । 'एव'–पदस्य 'सत्'–पदेन सह प्रस्तुतश्रुतौ श्रूयमाणः सम्बन्ध एव रमणीयः ।

'सदेवे'ति श्रुतौ कालवाचकस्य 'अग्रे' पदस्य प्रयोगस्तु पूर्वप्रथमाग्रादिशब्द–प्रयोगं विना 'सृष्टेः पूर्वं ब्रह्मासी'दित्यर्थस्य बोधो न भवितुं क्षम इति सृष्ट्युत्तरसमयवर्त्ति–व्यवहारानुसारेण कृतः, न तु सृष्टेः पूर्वं कालोऽप्यासीदित्यर्थस्य बोधनाय । किंचास्माकं मते तु '**कालरूपोऽवतीर्णः**' इत्यादि–वचनानुसारेण कालोऽपि ब्रह्म–रूप इति स्वीक्रियते । अतः सृष्टेः पूर्वं 'अग्रे'–पद–बोध्यः कालोऽस्तीत्यङ्गीकारेऽपि न 'सदेव सौम्ये'ति श्रुतेर्विरोधः । परन्तु भवन्तः स्वाभिमतामविद्यां न ब्रह्माभिन्नां मन्यन्ते । अतोऽविद्या सृष्टेः पूर्वमासीदिति स्वीकारेऽवश्यं 'सदेवे'ति श्रुतेर्विरोधः ।

किंच '**आत्मैवेदमग्र आसीत्**' '**आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते**' इत्याद्यासु सृष्टिप्रकरणस्थासु श्रुतिषु सर्वत्र 'आनन्द' 'आत्मा' इत्यादयः शुद्धब्रह्म–वाचकाः शब्दा उपलभ्यन्ते, नाविद्या–वाचकाः । भगवान् वेदव्यासश्च '**गौणश्चेन्नात्मशब्दात्**'

**'तन्निष्ठस्य मोक्षोपदेशात्'** इत्यादिसूत्रैः सृष्टिबोधकश्रुतीनां 'शुद्धं ब्रह्मैव जगन्निर्मातृत्वर्थ'इत्यकथयत् । अतोऽविद्या, अविद्या—युक्तं ब्रह्म वा जगतः कर्तृ इति न श्रद्धास्पदं भवितुमर्हति ।

**पूर्वपक्षी**—यच्च सांख्यैस्त्रिगुणात्मिका प्रकृतिः प्रपञ्च—रचयित्रीत्युक्तं, तस्य निषेधं कृत्वा 'ब्रह्म कर्तृ' इति कथयितुं 'गौणश्चे'दित्यादीनि सूत्राणि प्रवृत्तानि सन्ति । अतः 'सगुणं ब्रह्म न जगन्निर्माण—निपुण'मिति प्रमाणीकरणाय नैतान्युपयुज्यन्ते ।

**सिद्धान्ती**—पश्चिममीमांसा—प्रारम्भ एव भगवता वेदव्यासेन **'अथातो ब्रह्मजिज्ञासे'**ति सूत्रेण शास्त्रेऽस्मिन् ब्रह्म—विचारः प्रस्तूयत इति विचारः प्रतिज्ञातः । अयं च निर्गुणब्रह्म—सम्बन्धी एव भवितुमर्हति, यतो मुक्तौ निर्गुणब्रह्म—विचार एवोपयुङ्क्ते । एवं सति चैतत्प्रतिज्ञा—सूत्रतः परमुक्तं ब्रह्म जगज्जन्मादि—कारणमिति कथयितृ **'जन्माद्यस्य यत'** इति सूत्रं सगुणब्रह्म—निरूपण—परमिति न वक्तुं शक्यते, पूर्वापरविरोधात् । अतः शुद्धं ब्रह्मैव प्रपञ्चरचना—चतुरमिति स्वीकार आवश्यकः ।

**पूर्वपक्षी**—ब्रह्मस्वरूपवर्णन—पराणि वचनानि द्विविधानि । शुद्ध ब्रह्म—परिचायकानि, सगुणब्रह्म—बोधकानि च । शुद्धब्रह्म—परिचायकानि **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादीनि । सगुणब्रह्म—बोधकानि च **'यतो वा इमानि भूतानि जायन्ते'** इत्यादीनि । एषु च शुद्धब्रह्म—परिचायकानि मुख्यानि, यतस्तानि साक्षाद् ब्रह्मस्वरूपं परिचाययन्ति । सगुणब्रह्म—बोधकानि च गौणानि, यत एतानि ब्रह्मकार्य—सम्बन्धेन ब्रह्मस्वरूपमुपलक्षयन्ति । एषामेव च गौण—वचनानां **'गुणे त्वन्याय्य—कल्पना'** इति न्यायेन 'ब्रह्मण्यौपचारिकं कर्तृत्व'मित्यर्थः स्वीक्रियते । अत एषामाशयप्रकाशकं **'जन्माद्यस्य यत'** इति सूत्रं निर्गुणं ब्रह्म वर्णयतीति न कस्यापि श्रद्धेयं भवितुमर्हति ।

**सिद्धान्ती**—**'सत्यं ज्ञानमनन्तं ब्रह्मे'**ति निर्गुणब्रह्म—बोधकं श्रुतिवचनं यत्र तैत्तिरीयोपनिषदि ब्रह्म—वल्ल्यां विद्यते, तत्रैव सन्निधौ **'तस्माद्वा एतस्मादात्मन आकाशः संभूतः'** इति सृष्टि—प्रतिपादकं श्रुतिवचनमपि विद्यते । अतो निर्गुण—ब्रह्मणः सृष्टिर्भवतीति स्वीकरणमावश्यकमेव । नहि निर्गुणप्रकरणे सगुणस्य वर्णनं संभवति ।

किं च **'सर्वे वेदा यत्पदमामनन्ति'** इति श्रुतिः सर्वश्रुतिवेद्यमेकं ब्रह्मेति वदति । भवद्भिः 'सगुणं ब्रह्मे'त्युच्यमानो भगवान् श्रीकृष्णश्च **'वेदैश्च सर्वैरहमेव वेद्यः'** इति वचनेन स्वस्यैव सर्ववेदबोध्यत्वं वक्ति । अतो ब्रह्मणि सगुण—निर्गुणभेदं कल्पयित्वा प्रपञ्च—रचनाचातुरीप्रभृतयो गुणाः सगुणे ब्रह्मण्येव सन्ति, न निर्गुण इति न वक्तुं शक्यते ।

## वासनया जगत् प्रतीयते ।

( ४ ) **पूर्वपक्षी**—दिवसे ये पदार्था अवलोक्यन्ते तेषां संस्कारश्चेतसि जन्म लभते, तत्प्रभावेण च यथा स्वप्ने नानाविधानां पदार्थानां दर्शनं भवति, एवं कल्पान्तरे जन्मान्तरे च भ्रमतः प्रतीतानां पदार्थानां यश्चेतसि संस्कारो 'वासना'–शब्द वाच्यः, तेनेदं जगद् दृष्टिगोचरं भवति । अत इदं शुक्ति–रजतवन्मिथ्या, न कमपि कर्तारमपेक्षते । इतोऽन्यच्च ब्रह्मणः किमपि कार्यं नास्ति । तथा च ब्रह्मणि कर्तृत्वादयो गुणा वास्तविका इति कथनं सर्वथाऽसमञ्जसमेव ।

**सिद्धान्ती**—वासनोत्पत्तौ हि वासना–विषयस्य पदार्थस्यानुभवः कारणम् । अतो यया वासनयेदमिदानीं जगत् प्रतीयते, अस्याः कारणीभूतोऽनुभवः किंविषयकः ? । जगद्विषयक इति तु न वक्तुं शक्यते, जगतो वासनयेदानीमुत्पन्नत्वात् । अन्यविषयकश्चेत्तेन जगदुदयो न भवितुमर्हति । अतो वासनातो जगत्प्रतीतिर्भवतीति कथनं न विश्वासावहम् ।

**पूर्वपक्षी**—अयं हि प्रपञ्चप्रवाहो विरामशून्यः । इदानीं प्रपञ्चो विद्यते, पूर्वं नासीदिति न वक्तुं शक्यते । यथेदानीं जगद्वासनया प्रतीयते, तथा पूर्वमपि प्रतीतः, पश्चादपि प्रत्येष्यते । अत इदानींतन–वासनायाः कारणं जन्मान्तरीयः कल्पान्तरीयो वा प्रपञ्चस्याऽनुभवः । सोऽपि प्रपञ्चः स्वपौर्वकालिक–वासनया प्रतीतः । सा वासनाऽपि स्वपौर्वकालिकप्रपञ्चस्य भ्रमात्मकाऽनुभवत उत्पन्ना । एवं वासनातो जगत्, जगतश्चानुभवः, अनुभवतः पुनर्वासनेति प्रवाहो बीजाङ्कुरप्रवाहवत् सर्वदा प्रचलति । अतो वासनातो जगत्प्रतीतिर्भवतीति कथनं तथ्यमेव ।

**सिद्धान्ती**—पण्य–वीथिकायां पर्यटन् जनो नाना वस्तूनि विलोकते, परन्तु गृहागमनोत्तरं केषाञ्चिदेव स्मरणं भवति, न सर्वेषाम् । अनेनेदं निश्चीयते यत्सर्वेभ्यो वासना नोत्पद्यन्ते, केवलं निश्चयात्मकेभ्योऽनुभवेभ्य एवोत्पद्यन्ते । अतो वासनया यदि जगत् प्रतीयते चेत्, कल्पान्तरे जन्मान्तरे वा यस्य वस्तुनः संशयात्मक उपेक्षात्मको वाऽनुभवो जातः, तद् वस्तु वर्तमानजन्मनि चक्षुष्मताऽपि न प्रतीयेत । एवं च दर्शनयोग्यं स्थूलाकारं किमपि वस्तु एकेन चक्षुष्मता प्रेक्ष्यते, परेण चक्षुष्मता नेति घटनाऽपि क्वचन प्रपञ्चे घटेत ।

**पूर्वपक्षी**—यदा कदाचन संशयेनोपेक्षया वा दृष्टमपि वस्तु स्मारकमहिम्ना स्मर्तुः प्रयत्नेन वा स्मृतिपथमुपयातीत्यनुभवामः । अतो निश्चयात्मकेभ्य एवानुभवेभ्यो वासना उत्पद्यन्ते, नान्येभ्य इति न वक्तुं शक्यते । नापि च कस्यापि वस्तुनः प्रतीत्यभावो भवितुमर्हति ।

**सिद्धान्ती**—कदाचन संशयेनोपेक्षया वा दृष्टस्यापि कस्यचन वस्तुनः स्मरणं भवति

परन्तु सर्वस्यापि सर्वदा च न भवतीति तु भवानपि मन्यते। अत एतदर्थं सर्वेषामनुभवानां वासनाजनकत्वेऽपि सर्वासां वासनानामुदयो नियमेन न भवतीत्यवश्यं स्वीकरणीयम्। एवं च पूर्वमुक्तः प्रतीत्यभावो दोषः पुनरपि पूर्ववत्स्थित एव।

**पूर्वपक्षी**—उदयस्तु सर्वासामपि वासनानां नियमेन भवत्येव, परन्तूद्बोधकमपेक्षते–यत्र २ यस्या २ उद्बोधकः सन्निधत्ते, तत्र तत्र सा २ वासना व्यक्तीभवति, न सर्वाः सर्वत्र।

**सिद्धान्ती**—सर्वासामपि जगद्विषयाणां वासनानां येनोदयो जायते तद् उद्बोधकाभिधं वस्तु किमिति पृच्छामः। यदि तत्किमपि दृश्यं वस्तु चेत्, तद्दर्शिकाया वासनाया उदयः कुतो जातः?। यदि धर्माधर्म–समयादि किमप्यदृश्यं वस्तु चेत्, न तद्वासनोदयाय स्वयमुपयुङ्क्ते, कस्यचन दृश्यवस्तुनः साहाय्येनैव वासनोदयकर्मणि क्षमते। यथा शुक्तिनाम्नो दृश्य–वस्तुनो दर्शनं विना रजतावभासिकाया वासनाया उदयो न भवति, एवं कस्यचन दृश्योद्बोधकस्य दर्शनं विना जगद्विषयाया वासनाया अप्युदयो न भवितुं प्रभुः। तथा च वासनोदयेनोद्बोधकस्य दर्शनम्, उद्बोधकस्य दर्शनेन च वासनोदय इत्यन्योन्याश्रयः।

भगवान् वेदव्यासश्च **'वैधर्म्याच्च न स्वप्नादिवत्'** इति सूत्रेण जगत् स्वप्नदृष्टपदार्थ–सदृशं वासनोत्पन्नं मिथ्या नास्तीति वदति। अतो वासनया जगत्प्रतीयत इत्युक्तिरामूलमौलि अयुक्तैव।

## अविद्यया जगत् प्रतीयते।

(५) **पूर्वपक्षी**—यथा घटसम्बन्धेनाकाशं व्यापकमपि परिच्छिन्नं प्रतीयते, एवमविद्या–सम्बन्धेन ब्रह्मापि 'परिच्छिन्नमज्ञं, कर्तृ, भोक्तृ'इत्यादि–व्यपदेशभाग्भवति। इदमेव जीव–स्वरूपम्।

अविद्या जीवमावृणोति, अतः 'अज्ञानम्' 'अविद्या' इत्यादयः शब्दा एतद्बोधाय प्रयुज्यन्ते, परन्त्वेतेनाविद्या ज्ञानाभाव–स्वरूपेति न वक्तुं शक्यते। यदि ज्ञानाभाव–स्वरूपा चेत्, अस्या 'अहमज्ञ' इति प्रत्यक्षं न स्यात्। यतोऽभावस्यानुपलब्धिनाम्ना प्रमाणेन प्रतीतिर्भवति, न तु प्रत्यक्षतः।

इयमेव भावाज्ञान–स्वरूपाऽविद्या जीवाय विचित्रं प्रपञ्चं (जगत्) दर्शयति। इयं चाघटितघटना–पटीयसी, अतो न प्रपञ्चप्रत्यायनाय कमपि सहायमपेक्षते। प्रपञ्चश्चाविद्याकृत–भ्रम–प्रभावतः प्रतीत इत्यसत्य एव। अत एव मोक्ष–दशायां प्रपञ्चाभावं प्रतिपादयन्ती **'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्'** इति श्रुतिरपि सार्थ-

कीभवति, यत इयं मोक्ष–दशायां प्रपञ्चस्याभावं वदति । अभावश्चासत्यस्यैव भवितुमर्हति, न तु सत्यस्य ।

**सिद्धान्ती**—सर्वज्ञे ब्रह्मणि ज्ञानावरणकारिण्या अविद्यायाः सम्बन्धो न भवितुमर्हति, तेजसि तिमिरस्येव । अविद्या चाज्ञे जीवे विद्यते, ब्रह्मणि नास्तीति न वक्तुं शक्यते, युष्माकं मते ब्रह्मजीवयोरत्यन्ताभेदस्वीकारात् । अतो निवासभवनालाभादविद्या न जगत्प्रतीति–निर्वाहाय समर्था ।

## जीवः प्रतिबिम्बो नास्ति ।

( ६ ) **पूर्वपक्षी**—मायायां यश्चैतन्यस्य प्रतिबिम्बः स ईश्वरः । स च सर्वज्ञः, यतो माया शुद्धसत्व–प्रधानेति ज्ञानस्यावरणं न करोति । अथाविद्यायां यश्चैतन्यस्य प्रतिबिम्बः स जीवः । स चाज्ञः, यतोऽविद्या मलिनसत्त्व–प्रधानेति ज्ञानस्यावरणं करोति ।

इमानि जीवेश्वरशुद्धचैतन्यानि मायाऽविद्या–सम्बन्ध–महिम्ना व्यवहारावस्थायां परस्परं भिन्नानि प्रतीयन्ते । व्यवहारावस्थायामेव च जीवस्याविद्यया जगत् प्रतीयते । परन्तु भेदकारणीभूते मायाविद्ये मिथ्येति वस्तुत इमानि जीवेश्वरशुद्धचैतन्यान्यभिन्नान्येवेति वदामः ।

**सिद्धान्ती**—रूपं, रूपवान्, रूपवति वर्तमानाः संयोगविभागादयः कतिपये धर्माश्चेत्येषामेव प्रतिबिम्बो भवति । युष्माभिरङ्गीकृतं ब्रह्माभिधं शुद्धचैतन्यं च न रूपं, न रूपवान्, न रूपवतः कश्चन धर्मः, अतो नास्य कथमपि प्रतिबिम्बो भवितुमर्हति । किंच प्रतिबिम्बो दर्पणसदृशे कस्मिँश्चन स्वच्छे वस्तुनि जन्म लभते, । अविद्या च नितान्तं मलिना । अतो नास्यां प्रतिबिम्बसंभवो युक्ति–युक्तः । किंच ब्रह्मणोऽविद्यायां प्रतिबिम्ब इति भवदीय–भणिते श्रुति–स्मृति–प्रभृति किमपि प्रमाणं न वर्तते, केवलं स्वकीय–कल्पनयैवेदं स्थिरीक्रियते । कल्पना च लोकानुकूलैव विदुषामादरणीया भवति । यदि लोके क्वचन नीरूपस्य पवनस्य प्रतिबिम्बो मलिनतम इन्धने निरीक्ष्येत, तर्हि नीरूपस्य ब्रह्मणोऽपि प्रतिबिम्बो मलिनाविद्यायां स्वीक्रियेत ।

**पूर्वपक्षी**—नीरूपस्याकाशस्य प्रतिबिम्बो दर्पणे दृश्यत एवेति ब्रह्मणो नीरूपत्वेऽपि प्रतिबिम्बो नासम्भवः । अविद्या यद्यपि मलिना, परन्त्वेकस्मिन् भागे स्वच्छा । अतो यथा रजतपात्रं स्वपृष्ठप्रदेशवर्तिनो घटस्यावरणं करोति, अग्रभागभाजिनां रवीन्दुतारकाणां च प्रतिबिम्बं गृह्णाति, इत्थमविद्यापि ज्ञानावरणं ब्रह्मप्रतिबिम्बग्रहणं चेति द्वयमपि कर्तुं क्षमते । किंच पश्यन्त्येवोपरागावसरे कज्जल–मलिनेऽपि दर्पणे दिनेशप्रतिबिम्बम् । अतोऽविद्याया मलिनत्वेऽपि नास्यां ब्रह्म–प्रतिबिम्बोऽसम्भवः ।

**सिद्धान्ती**—पानीयदर्पणादावाकाशो न प्रतिबिम्बते, किन्त्वाकाशान्तर्वर्तिनां सूर्य–चन्द्र–नक्षत्राणां प्रभा प्रतिबिम्बते । अस्यामेव च जना गगनं प्रतिबिम्बितमिति भ्राम्य-

न्ति। अतोऽविद्याया एकतः स्वच्छत्वेऽपि, दृष्टान्ताभावेन नीरूपस्य ब्रह्मणोऽस्यां प्रतिबिम्बो न स्वीकर्तुं शक्यते।

**पूर्वपक्षी**—आकाशान्तर्वर्तिनः प्रकाशस्य तु प्रतिबिम्बो भवत्येव, परन्तु सहैतेनाकाशस्यापि भवतीत्यङ्गीकृतिरावश्यिकी, यतः पानीये पृथगेव प्रभाप्रतिबिम्बतः, प्रत्यक्षीकुर्वन्ति सर्वेऽपि प्रतिबिम्बमम्बरस्य। किञ्चेमं प्रतिबिम्बं सर्वदा प्रत्यक्षीकुर्वन्ति, अतोऽयं भ्रम इत्यपि न वक्तुं शक्यते, यतो भ्रमः कियत्समयतः परं विशीर्यते, न सर्वदाऽवतिष्ठते। अत आकाश—दृष्टान्तानुसारेण नीरूपस्य ब्रह्मणः प्रतिबिम्बः सुखेन स्वीकर्तुं शक्यते।

**सिद्धान्ती**—आकाशस्य प्रतिबिम्बेऽङ्गीकृतेऽपीदंदृष्टान्तानुसारेण न ब्रह्मणः प्रतिबिम्बः प्रमाणीकर्तुं शक्यते, यत आकाशं हि सर्वदा प्रभा—सहितमेव प्रतिबिम्बते, प्रभा च रूपम्। तथा चाकाशस्यापि प्रतिबिम्बे रूपमेव बीजमिति सिद्ध्यति। युष्माभिरङ्गीकृतं ब्रह्म—स्वरूपं च सर्वथा रूपसम्बन्धरहितम्। अतो नायं दृष्टान्तो ब्रह्मप्रतिबिम्ब—समर्थनायोपयुज्यते।

किञ्च रूपवत एव प्रतिबिम्बो भवतीति नियमे 'रूपवत्'—शब्देन दृश्य—पदार्थ एव विवक्षितोऽस्ति। आकाशश्च यद्यपि न रूपवान्, तथापि स्वभावप्रभावतो दृश्यः। अतोऽस्य प्रतिबिम्ब—स्वीकारो निर्विकारः, परन्तु भवदभिमतं ब्रह्म—स्वरूपं, नापि सरूपं, नापि दृश्यम्, अतस्तस्य प्रतिबिम्बः सर्वथाऽसम्भव एव।

**पूर्वपक्षी**—यथा प्रतिबिम्बने वस्तुनो दृश्यत्वमपेक्ष्यते, एवं दृश्यत्वेऽपि रूपमपेक्ष्यते। यदि गगनं विनैव रूपं स्वभावप्रभावतो दृश्यं चेद्विनैव रूपं ब्रह्मापि स्वभाव—प्रभावतः प्रतिबिम्बिष्यते।

**सिद्धान्ती**—आकाशस्य प्रतिबिम्बस्तु प्रत्यक्षप्रमाणतः प्रतीयते, अतस्तदुपपत्तये यद्वस्तुसामर्थ्यं सार्थकीक्रियते, तदुचितमेव, परन्तु ब्रह्मणः प्रतिबिम्बो भवतीति न केनापि प्रमाणेन भण्यते, अत एतत्समर्थनाय वस्तुसामर्थ्य—स्वीकरणं नापेक्ष्यते। किञ्च व्यापकस्य व्यापके प्रतिबिम्बो न भवति, अतो ब्रह्मणोऽप्यविद्यायां प्रतिबिम्बो न स्वीकर्तुं शक्यते, यतो ब्रह्माविद्या चेति द्वयमपि युष्मन्मते व्यापकम्।

**पूर्वपक्षी**—यथाऽऽकाशस्य प्रतिबिम्बः प्रत्यक्षप्रमाणतः प्रतीयते, तथा ब्रह्मणः प्रतिबिम्बोऽनयाऽऽथर्वणश्रुत्या प्रत्याय्यते। तथाहि श्रुतिः—

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ १॥**

अर्थः—एक एव परमात्माऽविद्या—कल्पितेषु नानावस्तुषु स्थितोऽस्ति, उपाधि—सम्बन्धवशेन पानीयान्तः—पतितचन्द्रप्रतिबिम्बवत् एकरूपतो नानारूपतश्च प्रतीयते।

इयं श्रुतिर्जलचन्द्र–दृष्टान्तं दर्शयन्ती व्यक्तमेव जीवः प्रतिबिम्बो ब्रह्मण इति प्रमाणीकरोति । एवमेव च **'रूपं रूपं प्रतिरूपो बभूवे'**ति बृहदारण्यकश्रुतिरपि वक्ति । किंच जीवो ब्रह्मणः प्रतिबिम्बोऽस्तीत्यत एव **'तत्त्वमसि' 'अयमात्मा ब्रह्मे'**त्यादीन्यभेदवादिवेदवचनानि सङ्गतानि भवन्ति, यतः सर्वथाऽभेदो हि बिम्बप्रतिबिम्बयोरेव संभवति ।

**सिद्धान्ती—'एक एव हि भूतात्मे'**ति श्रुतिर्जलचन्द्र–दृष्टान्तेन जीवं प्रतिबिम्बं वक्तीति वक्तुर्भ्रम एव, यतो हि 'जलचन्द्र'–शब्दस्य न चन्द्र–प्रतिबिम्बोऽर्थः, किन्तु मण्डलाकारेण प्रतीयमानानि पानीयप्रविष्टानि चन्द्रकिरणान्यर्थः । अस्याः संपूर्णश्रुतेश्चायमाशयः–यथा शशी रश्मिमण्डलरूपेण निजतेजोंऽशेन जले स्थितः सन् मण्डलरूपेणैकः, कम्पप्रभाववैभवेन च नाना प्रतीयते, एवं ब्रह्मापि प्रति–शरीरं जीवरूपेणैकः, इन्द्रियरूपेण च नाना प्रतीयते ।

कस्यांचन शाखायां **'एकधा बहुधे'**ति 'बहुधा' पदस्य स्थाने 'दशधे' त्यपि पदं पठ्यते, तदपि दशेन्द्रियाणि निर्दिशन्नुपरि परिदर्शितमेवार्थमवबोधयति ।

किञ्च जीवः प्रतिबिम्ब इति प्रमाणीकरणाय **'रूपं रूपं प्रतिरूपो बभूवे'**ति श्रुतिरपि नोपयुङ्क्ते, यत इतः श्रुतेः पूर्वं प्रकरण–प्रारम्भ एव **'योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्'** इति श्रुत्या, प्रकरणविरामे च **'अयमात्मा ब्रह्मे'**त्यादिश्रुत्या ब्रह्म सर्वरूपमिति प्रतिपादितं विद्यते, अतः प्रकरणानुसारेणान्तरालवर्तिन्या अस्या अपि श्रुतेर्ब्रह्म सर्वरूपमित्येव तात्पर्यं भवितुमर्हति । अत्रैवं सङ्गतिः—**'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः'** इति पूर्ववर्तिन्यां श्रुतौ ब्रह्म नानाप्रकाराणि शरीराणि निर्माय तेषु प्राविशदिति वर्णितं विद्यते । यो यन्निर्माति यत्र वा विशति स ततो भिन्न एव भवतीति च सर्वत्र व्यवहारे लोचनगोचरीकृतम् । अतः 'पुरश्चक्रे' इत्यनेन ब्रह्मणः सर्वरूपताया लोपः प्राप्तः । इमं च लोपं परिहर्तुमियं **'रूपं रूपं प्रतिरूपो बभूवे'**ति श्रुतिः, परमात्मा रूपं रूपं निरूप्य निरूप्य वस्तूनि निर्माय निर्मायेति यावत्, प्रतिरूपः प्रतिपुस्तकन्यायेन सर्वेषां मूलरूपोऽभवदित्यर्थं कथयति ।

किञ्चानन्तरोक्तया **'अयं वै हरयः'** इत्यनया विवरणकारिण्या श्रुत्याऽप्यस्याः श्रुतेरयमेवोपरि परिदर्शितोऽर्थ उक्तः । अतोऽयमेव युक्त इति मञ्जूरीक्रियताम् ।

**पूर्वपक्षी—**अविद्या हि अघटितघटनापटीयसी । अत एतस्या ब्रह्मणश्च व्यापकत्वेऽपि नैतस्यां ब्रह्मणः प्रतिबिम्बनमसम्भवम् ।

किञ्च पूर्वं प्रदर्शितासु श्रुतिषु प्रतिबिम्ब–बोधकस्य शब्दस्य स्पष्टमनुपलम्भेनार्थस्यान्यथापनं संभवति, परन्तु तृतीयकठवल्लीप्रारम्भ एवेयं श्रुतिः—

**ऋतं पिबन्तौ सुकृतस्य लोके गुहाँ प्रविष्टौ परमे परार्द्धे।**
**छायाऽऽतपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः।**

जीवस्य बोधाय 'छाया'-शब्दं प्रयुङ्क्ते। 'छाया'-शब्दश्च प्रतिबिम्बशब्दपर्यायः। अतो जीवः प्रतिबिम्ब इति स्वीकरणमावश्यकमेव।

**सिद्धान्ती**—'छाया'-शब्दः प्रतिबिम्ब-बोधकश्चेत्, इयं श्रुतिः '**द्वा सुपर्णे**'त्याद्या अन्याश्च श्रुतयो यद् हृदयाकाशे जीवात्मना सह परमात्मनः प्रवेशं स्थितिं च कथयन्ति तदसङ्गतं स्यात्, यतो बिम्बप्रतिबिम्बयोर्नैकत्र प्रवेशः स्थितिर्वा संभवति। चन्द्र-बिम्बमम्बरे तत्प्रतिबिम्बश्चाम्बुनीति लोकेऽवलोकामहे।

किञ्च छाया प्रकाशाभिमुखं नावतिष्ठते, प्रतिबिम्बस्त्ववतिष्ठत इति छाया-प्रतिबिम्बौ भिन्नावेव पदार्थौ। किञ्चोक्तश्रुतौ (छायाऽतपौ ब्रह्मविदः) जीवस्य बोधाय यथा 'छाया'-शब्दः प्रयुक्तस्तथा ब्रह्मणो बोधाय 'आतप'-शब्दः प्रयुक्तः। यदि जीवो ब्रह्मणः प्रतिबिम्बश्चेत्, जीवं 'छाये'ति न वदेत्, ब्रह्म वाऽऽतप इति न वदेत्। न हि आतपस्य प्रतिबिम्बश्छाया भवति। अतो ज्ञानानन्दादि-तिरोभावेन यज्जीवे परमात्मनोऽपेक्षया वैलक्षण्यं, तस्य बोधाय 'छाया'-शब्दः प्रयुक्तो, न तु जीवः प्रतिबिम्ब इति वक्तुमित्येव मन्तव्यम्।

**पूर्वपक्षी**—यदि 'छाया'-शब्दस्य प्रतिबिम्बोऽर्थो न संभवति चेत्, आनन्दतिरोभावोऽर्थोऽपि न संभवति। न हि क्वचन लोके 'छाया'-शब्दस्यानन्दतिरोभावोऽर्थो दृष्टः। यदि संपूर्णश्रुतेरर्थपर्यालोचनयेदं युक्तं प्रतिभाति चेत्, मदुक्तोऽर्थोऽप्येवम्। किञ्चिद्विलक्षणा छायैव प्रतिबिम्ब इति तदर्थापेक्षयाऽयमेवाधिकमक्षरानुगुणोऽपि। ब्रह्मण्यातप-शब्द-प्रयोगस्तु गौण इति नास्मिन्नर्थे बाधको भवितुमर्हति। बिम्बप्रतिबिम्बयोरपि ब्रह्म-जीवयोर्हृदयाकाशे प्रवेशः, श्रुतिः कथयतीत्यवश्यं स्वीकरणीय एव, यतो वेदोक्तोऽर्थो न निषेद्धुं शक्यते।

**सिद्धान्ती**—ब्रह्मजीवयोर्हृदयाकाशे प्रवेश-स्थिती तु, श्रुतिः कथयतीत्यवश्यं स्वीकरणीये एव, परन्तु जीवेन सह हृदयाकाशे प्रवेशं कर्तुं जीवस्य हृदयाकाशस्य च दर्शनमपेक्षते ब्रह्म। भवन्मतानुसारेण च सर्वज्ञं ब्रह्म नैतौ द्रष्टुं शक्नोति, यतः प्रतिबिम्ब-स्वरूपो जीवो हृदयाकाशश्चेति द्वयमप्यविद्याप्रभवभ्रम-कल्पितम्। एतत्तस्यैव लोचनगोचरीभवितुमर्हति योऽविद्यया भ्राम्यति। लोकेऽपि शुक्तिदर्पणादिगतचाकचक्यदोषेण यो भ्राम्यति स एव प्रातिभासिकं रजतं पश्यतीति दृष्टचरम्। अतो जीवः प्रतिबिम्ब इति स्वीकरणात्पूर्वमयं विरोधः परिह्रियताम्। किञ्च ब्रह्म जीवं न विलोकते, अतः '**क्षरात्मानावीशते देव एकः**' इति श्वेताश्वतरश्रुतेरपि विरोधः, यत इयं श्रुतिर्ब्रह्म

जडजीवौ नियमयतीति वक्ति, दर्शनाभावे च नियमनं न संभवति । एवमेव नियमनवादिनीनामन्तर्यामिब्राह्मणस्थश्रुतीनामपि विरोधः, । यद्यासां श्रुतीनामनुरोधेन ब्रह्म अविद्याकल्पितं हृदयाकाशं, जीवं च विलोकत इति स्वीक्रियते, तर्हि ब्रह्म जीववद् भ्रान्तमज्ञं चेति सिद्धम् ।

**पूर्वपक्षी**—शुद्धं ब्रह्म जीवं न नियमयति, किन्तु मायोपाधि-सम्बद्धं सगुणं ब्रह्म । तच्च यथोपाधिसम्बन्धमहिम्ना प्रपञ्चरचनां करोति, तथा जीवहृदयाकाशदर्शनप्रवेशादिकमपि करोति । अनेन च तद् भ्रान्तमज्ञं चेत्यपि वक्तुं न शक्यते, यतः शङ्खः श्वेत इति जानतोऽपि दोषवशेन शङ्खे पीतिमा प्रतिभात्येव, तत्वज्ञानवतोऽपि दर्पण-सम्बन्धेन प्रतिबिम्ब-प्रतीतिर्भवत्येव । न चैतदंशे दर्शकस्य स्वरूपदूषकः कोऽप्यज्ञत्वादिदोषः केनापि कथ्यते । अतो जीवः प्रतिबिम्ब इत्यङ्गीकारो निरवकर एव ।

**सिद्धान्ती**—यं जीवं **'नित्यो नित्यानाम्' 'नित्यः सर्वगतस्थाणुः'** इत्याद्या नाना श्रुतयः स्मृतयश्च नित्यं वदन्ति, स प्रतिबिम्बो न भवितुमर्हति, यतः प्रतिबिम्बो हि मायिकज्ञान-स्वरूपो मिथ्या वस्तु ।

किञ्चायं प्रतिबिम्बोऽविद्यागतः, अतो दर्पणादिनाशे यथा तद्गता ग्रहपतितारादि-प्रतिबिम्बाः प्रणश्यन्ति, तथा मोक्षदशायामपरोक्षज्ञानेनाविद्यानाशे एषोऽपि प्रणङ्क्ष्यतीत्युपर्युक्तं नित्यत्वं सर्वथाऽसम्भवमेव ।

किञ्च मोक्षदशायां जीवो नश्येच्चेत्, मोक्षलाभाय न कोऽपि जीवः प्रवर्तेत, यतः स्वयं स्वस्य नाशं न कोऽपि चिकीर्षति । किञ्च मोक्षस्य साधनान्यविद्याजनितानि मिथ्येति परिज्ञायापि न प्रवर्तेत, यतो मिथ्या साधनेनाऽपि सत्यं फलं लब्धुं शक्यत इत्यत्र न कोऽपि विश्वसिति । इत्थमेव स्वर्गादिसाधनेष्वपि प्रवृत्तिर्न संभवति, यतस्तान्यपि प्रपञ्चान्तःपातितया भवन्मते मिथ्यैव ।

## वैदिक-साधनेषु प्रवृत्तिः ।

( ७ ) **पूर्वपक्षी**—यो वेदो जीवः प्रतिबिम्ब इति, जगच्चाविद्याकल्पितमिति वक्ति, स एव स्वर्गादि-साधनेषु प्रवर्ततामित्यप्याज्ञापयति । यदि स जगज्जीवयोरुपरि परिचायिते स्वरूपे श्रद्धां संपादयितुं प्रभवति चेत्, उक्त-साधनेषु जीवान् प्रवर्तयितुमपि प्रभविष्यति ।

किञ्च यदा जीवः स्वर्गादि-साधनेषु प्रवर्तते, तदा जगन्मिथ्येति ज्ञानमपि तस्य नास्ति, यत इदं कर्मोपासनाभ्यां मनोमलेषु क्षीणेषु मुमुक्षु-दशायामुदयते । अत एतेन प्रवृत्तिप्रतिरोधो न शङ्कितुं शक्यः ।

किञ्च प्रवृत्ति–समये जगन्मिथ्येति ज्ञानमस्तीति स्वीकारेऽपि प्रवृत्तेरवरोधो न वक्तुं शक्यः, यतस्तदानीं स्वर्गादिसाधनानां जगतश्च यद् भ्रमात्मकं ज्ञानं, तद्धि प्रत्यक्षात्मकमस्ति। जगन्मिथ्येति ज्ञानं च केवलं शाब्दं परोक्षम्। एवमिदं ज्ञानद्वयं परस्परं विजातीयं विद्यते, बाध्यबाधकभावश्च सजातीयेष्वेव भवितुमर्हति, न विजातीयेषु। तथा चाविद्याभ्रम–प्रभवस्यास्य भुवनविटपिन आधारभूतं ब्रह्म यावत्प्रत्यक्षं न भवति तावज्जगन्मिथ्येति–वादिना केनापि प्रमाणवचनेन जगद्भ्रमं न निवारयितुं पार्यते। जगद्भ्रमविरामाद्भिन्नश्च न कश्चन प्रवृत्तिप्रतिबन्धक इति सर्वं निरवकरम्।

**सिद्धान्ती—'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'**ति श्रुतिरुपनयनानन्तरं द्विजन्मना षडङ्गसहिताः श्रुतयः सर्वार्थपरिचयपूर्वकं पठनीया इति निदेशं ददाति। युष्मन्मतानुसारेण च पठनेऽवश्यमेवोपनिषच्छिक्षणावसरे जगन्मिथ्येति ज्ञानं भावि। स्वर्गादि–साधनेषु च प्रवृत्तिर्वेदाध्ययनानन्तरमेव। अतस्तदानीं जगन्मिथ्येति ज्ञानं नास्तीति न वक्तुं शक्यते।

किञ्च जगन्मिथ्येति ज्ञानेन प्रवृत्ति–समये जगद्भ्रमस्य बाधो नापि स्यात्, तथापि प्रवृत्तिस्तु न संभवति, यतो जगद्भ्रमबाध एव प्रवृत्तिं न प्रतिबध्नाति, किन्तु मिथ्या–ज्ञानमपि प्रतिबध्नाति। जले प्रतिबिम्बितान्याम्रफलान्यवलोक्यापि, इमानि मिथ्येति जानन्न कश्चन तेषामादानाय प्रवर्तत इति लोके पश्यामः।

किञ्चानेन शाब्देन परोक्षेण मिथ्या–ज्ञानेन ब्रह्मसाक्षात्कार–पर्यन्तं प्रत्यक्षात्मकस्य जगद्भ्रमस्य बाधो न भवतीत्यपि वक्तुं न शक्यते, यतो बाध्य–बाधकभावः परस्परं सजातीयेष्वेव भवति, न विजातीयेष्विति नियमो नास्ति। दूरादेव दृष्टे चिक्कणकार्पासवाससि पट्टाम्बरमिति यश्चाक्षुषभ्रमो भवति तस्य बाधो विजातीयेन स्पार्शन–प्रत्यक्षेण लोके दृष्टः। एवं विरलान्धकारायां रात्रौ स्तम्भे जातस्य मनुष्योऽयमिति चाक्षुषभ्रमस्यापि स्पर्शेन बाधो दृष्टः। एवंविधान्यन्यान्यपि नानोदाहरणानि सन्ति यैर्विजातीयेष्वपि बाध्यबाधकभावो भवतीति प्रमाणीक्रियते।

किञ्च सजातीयेष्वेव बाध्य–बाधकभावो भवतीति नियमे मञ्जूरीकृतेऽपि स्वर्ग–साधनेषु प्रवृत्तिर्युष्मन्मतानुसारेण न समर्थयितुं शक्यते, यतो 'दर्शपौर्णमासादयो यज्ञाः स्वर्गसाधनानि' 'स्वर्गसाधनानि च मिथ्ये'ति ज्ञानद्वयं केवलं वेदत एव लब्धावतारमिति शाब्दं सजातीयमेव, भवितुमर्हति चैतयोः परस्परं बाध्यबाधकभावः।

किञ्च यथा कथंचन प्रवृत्तौ सत्यामपि मिथ्या साधनतः सत्फललाभस्तु सर्वथाऽसम्भव एव। अपि च स्वर्गादिफलानि तु साधनवन्नश्वराणीत्यपि वक्तुं शक्यते, परन्तु मोक्षस्त्वेवंविध इति वक्तुं न शक्यते, अत एतैर्मिथ्यासाधनैर्मोक्षलाभस्त्ववश्यं दुर्घटः।

वस्तुतो जगदाधारभूतस्य ब्रह्म–स्वरूपस्य साक्षात्कारोत्तरं जगद्बाधो भविष्यतीत्याशा, आकाशकमलमकरन्दास्वादनाशा–सदृश्येव, यतो ब्रह्म–साक्षात्कारेणाज्ञानकार्यस्याऽहन्ता-ममतास्वरूपस्य संसारस्यैव बाधः कर्तुं शक्यते, न तु ब्रह्मस्वरूपस्य जगतः। किञ्च ब्रह्म-साक्षात्कारेण जगतो बाधश्चेत्, जनकादिराजानां या राज्यादिकार्येषु प्रवृत्तिः पुराणैः श्राव्यते साऽसङ्गता स्यात्।

**पूर्वपक्षी**—अस्य जगतो ब्रह्म–साक्षात्कारेण बाधो भवतीति वेदो वदति, बाधश्चास-त्पदार्थस्यैव भवितुमर्हति, अतो जगन्मिथ्येतिसिद्धान्त–स्वीकारः सर्वथाऽपरिहार्य एव। अत एव स्वर्गमोक्षसाधनानि मिथ्येत्यङ्गीकरणमपि स्वतः प्राप्तम्, यत एतान्येतन्मिथ्या-प्रपञ्चान्तःपातीनि। एतेषु मिथ्या साधनेषु प्रवृत्तिस्तु संप्रतिपर्यन्तमनन्तजीवानामजनि मन्मतानुसारेणेति, द्वित्राभिः प्रतिकूलयुक्तिमतीभिरुक्तिभिरधुना न कथमपि प्रतिबद्धुं शक्या। किञ्चैतान्यसन्ति सन्तु, परन्तु वेदोपदिष्टं फलं यदि लब्धुं शक्यते चेदेभिः, नास्ति किमपि कारणमन्यद्येन प्रवृत्तिप्रतिबन्धो भवेत्।

यच्च ब्रह्म–साक्षात्कारोत्तरमपि जनकादीनां राज्यादिकर्मसु प्रवृत्तिरासीत्, तस्य कारणं तु केवलमिदमेव—यत्प्रारब्धकर्मणां भोगेन विना क्षयो न भवति, अतो यावत्प्रारब्धक-र्माण्यवशिष्टान्यासन् तावत्तेषां प्रभावतो बाधिताप्यविद्याऽनुवर्तते स्म, येन जनकादयः स्वस्य तत्फललिप्साऽभावेऽपि लोकशिक्षार्थं कर्माणि कृत्वा प्रारब्धशेषं क्षपयाञ्चक्रुः। अत एतदर्थं ब्रह्म–साक्षात्कारेण जगद्बाधो न भवतीति स्वीकरणमनावश्यकमेव।

**सिद्धान्ती**—ब्रह्मसाक्षात्कारेण प्रपञ्चस्य बाधो भवतीति वेदेन न क्वचिदुक्तम्। अतः प्रपञ्चः प्रपञ्चान्तःपातीनि साधनानि च मिथ्येति न स्वीकर्तुं शक्यते। किञ्च '**कथम-सतः सज्जायेते**'ति श्रुतिः, असद्भिः साधनैः सत्यं फलं लब्धुं न शक्यत इति वक्ति, अत इतो विरुद्धं स्वर्गमोक्षादिसाधनानां मिथ्यात्वं न स्वीकर्तुं शक्यते।

किञ्च स्वर्गमोक्षसाधनानां वक्ता वेदोऽपि न मिथ्या, यतः '**वेदो नारायणः सा-क्षात्**' इति श्रुतिर्वेदो नारायण इति कथयति। इयं च वेदस्याबाधिततात्पर्यतानिमित्ता प्रशंसेत्यपि नोचितं वचः, यतः शुक्तिरजतस्येव भ्रमतः प्रतीतस्य वर्णविन्यासस्य तात्प-र्यमबाधितं न भवितुमर्हति। अत एव '**वेदैश्च सर्वैरहमेव वेद्य**' इति गीतोक्तेरपि विरोधः, यत इयं सर्वेषां वेदवचसां भगवानर्थ इति वदति, भ्रमप्रतीतस्य च नेदं संभ-वति। किञ्च भागवतारम्भे '**तेने ब्रह्म हृदा**' इत्यनेन 'भगवान् ब्रह्मणे शब्दब्रह्म (वेदं) हृदयेनोपदिदेशे'त्युक्तमस्ति। इदं च वेदस्य शुक्तिरजतवन्मिथ्यात्वे न संभवति, यत एता-दृशः पदार्थो दोषवशेन स्वयमेव प्रतीतिपथमुपैति, न कमपि प्रेरकमपेक्षते।

किञ्च यदन्तःपातितया वेदो वेदोक्तसाधनानि च मिथ्येति स्वीक्रियते स प्रपञ्चोऽपि

मिथ्या नास्ति, यतः 'ऐतदात्म्यमिदं सर्वम्' इति श्रुतिः प्रपञ्चः परमात्मस्वरूप इत्युपदिशति। किञ्च प्रपञ्चः केवलं लोचनवञ्चनाभाजनमसन्नेव चेत् 'जन्माद्यस्य यतः' इति सूत्रेण प्रपञ्चरचयिता परमेश्वर इति व्यासो न वदेत्, यतः असद्वस्तु न रचयितारमपेक्षते। यद्यपेक्षतेऽपि, तथापि कमपि दोषविशेषमेव, नत्वीश्वर-सदृशम्।

किञ्च ब्रह्मसाक्षात्कारतो विलयं याताप्यविद्या प्रारब्धप्रभावतोऽनुवर्तत इति कथनमपि 'मम मुखे जिह्वा नास्ती'त्याभाणकमनुसरति, यतो विलीना चेदविद्या कथमनुवर्तते, यदि सर्वांशेन न विलीना, प्रारब्धप्रभावतः कियानंशोऽवशिष्यते चेत्, योंऽशोऽवशिष्यते तस्य नाशो न स्यात्, यतो ब्रह्मसाक्षात्कारादितरः कश्चनाविद्योच्छेदकारी न वर्तते।

## अविद्याया बाधितानुवृत्तिः।

(८) **पूर्वपक्षी**—अविद्या तु ब्रह्मसाक्षात्कारक्षण एव प्रणश्यति, परन्तु प्रारब्धकर्माणि भोगेन विना न क्षीयन्त इति शास्त्रं निर्दिशति, अतो भोगोपयोगिनी प्रवृत्तिरावश्यिकी। यथा दण्डदूरीकरणोत्तरमपि पूर्ववेगवशेन कलशकारचक्रं कियत्कालपर्यन्तं भ्रमत्येव, एवमविद्याविनाशतः पश्चादपि प्रारब्धपरिसमाप्तिपर्यन्तमनुरूपेषु कार्येषु प्रवृत्तिर्भवत्येवेति न किमप्यसमञ्जसम्।

**सिद्धान्ती**—प्रारब्धकर्माणि किमविद्यायामन्तर्भवन्ति, अविद्या-कार्येषु वा, अथवा सर्वथा भिन्नान्येव?। यद्यविद्यायामविद्याकार्येषु वा चेत्, अविद्याविनाशानन्तरं कथमवशिष्यन्ते। यदि सर्वथा भिन्नानि चेत्, तव सिद्धान्तविघातः। यच्च दण्डदूरीकरणोत्तरमपि कलशकारचक्रे भ्रमण-क्रियाऽवतिष्ठते तत्तु समुचितमेव, यतश्चक्रं हि द्रव्यात्मकम्, तत्र पूर्वभ्रमिप्रभवो वेगो वर्तते, परन्तु चेतसि स्थितं प्रारब्धकर्मणां सूक्ष्मरूपं तु गुणः कर्म वेति नास्मिन् द्रव्यधर्मो वेगोऽवस्थातुमर्हति, अतोऽविद्याविलयोत्तरं प्रवृत्तिर्न स्वीकर्तुं शक्या। किञ्चाविद्याविलयोत्तरमविद्याऽऽधारः प्रतिबिम्बो जीवो नावस्थातुमर्हतीति यदि प्रवृत्तिर्भवेदपि तदा कस्य?। यदीदंदोषभयेनान्तःकरणे चैतन्यप्रतिबिम्बोऽङ्गीक्रियते, तथापि यावदन्तःकरण-स्थितिस्तावत्प्रतिबिम्बावस्थाभिमानयोर्वर्तमानतया जीवः संसार्येव स्यात्, अन्तःकरणनाशानन्तरं च परममुक्तिरेव। अतो जीवन्मुक्तिस्तदुचितप्रवृत्तिश्च युष्मन्मतानुसारेण न कथमपि निर्वहति।

## जीवो नाभासः।

(९) **पूर्वपक्षी**—ब्रह्मैकं निरवयवं चेति श्रुतिशिरःशायिनानावचननिचयैरुच्यते, अतः 'एकधा बहुधा' 'अग्निर्यथैकः' इत्यादिभिः श्रुतिभिर्यैकस्य ब्रह्मणो नाना प्रतीतिर्वर्ण्यते तस्या उपपत्तिः प्रकारद्वयेनैव भवितुमर्हति। तत्र प्रथमः प्रकारस्त्वयम्-यथैक एव

चन्द्रो जलदर्पणादिनानाऽधारेषु प्रतिबिम्बमानो नाना प्रतीयते, एवमेव ब्रह्माविद्याया नानाप्रदेशेषु प्रतिबिम्बमानो नाना प्रतीयते । द्वितीयश्चायम्—यथा नयनयोर्मध्येमार्गमङ्गुलिविन्यासेनैक एव चन्द्रो नाना भाति, एवमविद्यासम्बन्धवशेनैकमेव ब्रह्म नानाप्रतीतिविषयं भवति । एतयोः प्रथमः प्रकारो यदि कियद्दोषवशेन न संमतश्चेत्, अयं द्वितीयः स्वीक्रियताम् । यत इतो भिन्नो नास्ति कश्चनैवंविधः प्रकारो, येनैकं ब्रह्म नानेति वेद–निदेशो विद्वज्जनसभासभाजनभाजनमुपपत्तिं लभेत । किञ्चोपरि परिदर्शितं पश्चिमं प्रकारं '**जीवेशावाभासेन करोती**'ति श्रुतिरपि संमनुते । अत्र च 'आभास'–शब्दः स्पष्टं श्रूयत एव । अर्थोऽपि चास्य नान्यथा भवितुमर्हति, यतो भगवान् व्यासोऽस्याः श्रुतेरर्थं निर्णयन् '**आभास एव चे**'ति सूत्रेण जीव आभास इत्यवदत् ।

**सिद्धान्ती**—एकमेव ब्रह्म नानारूपैः कथं प्रतीयत इत्यस्य समुचितमुत्तरं तु पश्चाज्जीवनिरूपणप्रसङ्गे वक्ष्यामः, परन्तु नानाप्रतीतिर्भवदभिमताभाससिद्धान्तानुसारेण न भवितुमर्हतीति तु निश्चितं ब्रूमः, यतः भवदभिमतौ ब्रह्मेश्वरौ ज्ञानैकघनौ—न कदाचिदपि भ्रमसंशयाद्यविद्याविलासभाजनं भवतः—अत एतयोरविद्यावशेन स्वीये परकीये वा रूपे न नानाप्रतीतिर्भवितुमर्हति । अविद्याप्रभवभ्रमप्रभावेणाभासशब्दवाच्यो योऽर्थः प्रतीयते स एव भवन्मते जीवः, अतोऽयं त्वनेकताप्रतीतिकर्ता यावत्कश्चन न निर्णीयते तावन्न सिद्ध्यति । एभ्यो भिन्नश्च कश्चनेदृशो नास्ति, य आत्मनोऽनेकतां ( आभासं ) प्रतीयात् । अतः पूर्वनिर्दिष्टभवदिष्टचन्द्रदृष्टान्तो जीव आभास इति सिद्धान्तसहायतायां सर्वथाऽसमर्थ एवेति स्पष्टमेव ।

किञ्च जीव आभास इति प्रमाणीकरणाय '**माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोती**'ति श्रुतिरपि नोपयुङ्क्ते, यतोऽस्यां 'दर्शयित्वे'ति क्त्वाप्रत्ययान्तं पदम् । 'क्त्वा'–प्रत्ययश्च '**समानकर्तृकयोः पूर्वकाले**' इति पाणिनिसूत्रेण पूर्वकालवर्तिनि वस्तुनि वाच्ये भवति । तथा च '**क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोती**'त्यनेन जीवेशौ क्षेत्रप्रदर्शनतः पश्चात् प्रकटीकरोतीति सिद्ध्यति । इदं च भवत्स्वीकृतयोर्जीवेशयोः स्वरूपतोऽत्यन्तं प्रतिकूलम् । यतस्तयोः स्वरूपमनादि, तच्च क्षेत्रशब्दवाच्यशरीराविष्करणक्षणे नास्ति, पश्चात्प्रकटीभवतीति सर्वथाऽसम्भवम् ।

वस्तुतोऽस्यां श्रुतावाभास–शब्दोऽध्यासपर्यायः । संपूर्णश्रुतेश्चायमर्थः–ब्रह्मणो 'माया'-शक्तिर्ब्रह्माभिन्नानि सर्वाणि शरीराणि दर्शयित्वा देहाध्यासेन ( ईशं ) ब्रह्माणं मनुष्यादिजीवाँश्च करोति ।

एवम् '**आभास एव चे**'ति व्याससूत्रस्याप्ययमेवाशयो यदानन्दादिधर्माणां तिरोभा-

वाज्जीवो न ब्रह्म, किन्तु कतिपयैश्चैतन्यादिगुणैर्ब्रह्मसमान इति ब्रह्माभासः। यथा विप्रो-पयुक्तैर्विद्यातपःप्रभृतिभिर्गुणैर्विप्रयुक्तो विप्रो विप्राभास इति भण्यते।

## अविद्या–ब्रह्मणोः सम्बन्धो न संभवति।

किञ्चाविद्याया ब्रह्मण्येवंविधः कश्चन सम्बन्धोऽपि न संभवति, येन ब्रह्म नानारूपैः प्रतीतं भूत्वाऽऽभासशब्दवाच्यं भवेत्। तथाहि–सर्वज्ञे ब्रह्मण्यज्ञानमूलोऽध्यासस्त्वविद्यायाः सर्वथा दुर्घट एव। संयोगोऽपि द्वयोः क्रियाभ्यामन्यतरक्रियया वा जायते। ब्रह्माविद्या चेति द्वावपि व्यापकौ–नैतयोरुपसर्पणापसर्पणाद्याः काश्चन संयोगसंपादिकाः क्रियाः संभवन्ति,–अतः संयोगसम्बन्धोऽप्यसम्भव एव। स्वरूपसम्बन्धस्तु नित्यत्वात्सर्वथाऽननुरूप एव, यतो नित्यस्य विच्छेदो न भवितुमर्हति, अविद्यासम्बन्धविच्छेदं विना च मुक्तिर्न संपद्यते।

## अविद्या–तत्सम्बन्ध–जीवा नानादयः।

यच्चाविद्या–तत्सम्बन्ध–जीवा अनादयः, अविद्या–सम्बन्ध एव चात्मनो जीवभावे बीजमिति भवन्तो वदन्ति, तदपि समुचितविचारविरहविलसितमेव, यतोऽनादिपदार्थः स्वरूपलभाय न कमपि कारणमपेक्षते। अतो ब्रह्मण्यविद्याया न कोऽपि सम्बन्धगन्धः संभवति। अत एव जीव आभास इत्यपि वक्तुं न शक्यते।

**पूर्वपक्षी**—'बन्धोऽस्याविद्ययाऽनादि'रिति भागवतोक्तिर्जीवस्य बन्धोऽनादिरविद्यानिर्मितश्चेति वदति। अतोऽविद्या–सम्बन्धोऽनादिरिति स्वीकरणमावश्यकमेव। अत एव जीवभावोऽप्यनादिः। अपरोक्षपदार्थस्वरूपपरिचयो हि शास्त्रवचनैकसंपाद्य इति नात्र स्वमतिसमुन्नीततर्कावकाशः।

**सिद्धान्ती**—यथा कल्पपरिसमाप्ताविन्द्रादिदेवा अपि जीवनावसानं लभन्त एव, परन्त्वनल्पकालं जीवन्तीत्यतोऽमरशब्देन बोध्यन्ते, एवमविद्याविरचित–बन्धोऽपि प्रपञ्चरचनाप्रारम्भत एव लब्धजन्मा, चिरसमयस्थायी चास्ति, अतः 'बन्धोऽस्याविद्ययाऽनादि'रिति वचनमेनमनादिरिति वक्ति, वस्तुतो नायमनादिः। यद्यनादिश्चेत् वचनमेनमविद्या–कृत इति न वदेत्, यतोऽनादिर्न केनापि कृतो भवति।

**पूर्वपक्षी**—अनादिजीवस्य तु बन्धेनाप्यनादिनैव भवितव्यम्। यद्यनादिर्न चेत्कियत्समयपर्यन्तं जीवस्य बन्धो नासीत्तदा जीवस्य दशा कीदृशी?। बद्धदशा, मुक्तदशा वा?। यदि बद्धदशा, तर्हि सिद्धं बन्धस्यानादित्वम्। यदि मुक्त–दशा चेत्, तदनन्तरं बन्धो न भवितुमर्हति। एतदुभयभिन्ना च काचन दशा शास्त्रे प्रसिद्धा नास्तीति न सा स्वीकर्तुं शक्यते।

**सिद्धान्ती**—बन्धहेतुरविद्या हि भगवतः शक्तिर्न तु भावरूपमज्ञानम्। शक्तिश्च

शक्तिमत इच्छानुसारेणैव कार्यं करोति । अतः प्रपञ्चरचनाप्रारम्भे कियत्कालं जीवस्य बन्धो नासीदित्यत्र भगवत इच्छैव कारणं वर्तते । शुकसनकादीनां नित्यमुक्ततायामपीयमेव कारणम् । तदानीं जीवश्च ब्रह्म–स्वरूपेणावतिष्ठते, अतो जीवस्य बद्धदशा मुक्तदशा वेति प्रश्नोऽपि नावकाशं लभते । अत एव बन्धोऽनादिरिति स्वीकरणं नावश्यकम् ।

यथाऽयं बन्धो भगवद्वाञ्छापरतन्त्रस्तथा मोक्षोऽपि, यतो मुक्तिदात्री विद्याऽपि भगवतः शक्तिरिति तदिच्छानुसारेणैव मुक्तिं ददाति । एवमनयोः साधनान्यपि भगवद्वाञ्छानुसारेणैव फललाभे साहाय्यमाचरन्तीति भगवद्वाञ्छापरतन्त्राण्येव । इत्थमेतानि सर्वाण्यप्यैच्छिकान्येव, न तु स्वाभाविकानि ।

किञ्च भावाज्ञानस्वरूपाया अविद्याया, ब्रह्मणः कस्मिँश्चनैकस्मिन्नंशे सम्बन्धः, सर्वस्मिन् ब्रह्मणि वा ? । एकांशे चेद्, ब्रह्म निरवयवमिति भवत्सिद्धान्तस्य विघातः । सर्वस्मिन् ब्रह्मणि चेद्, भवदभिमतो ब्रह्मेश्वरजीवविभागो व्यवहार–दशायामपि नावस्थातुमर्हति । अतो भावाज्ञानस्वरूपाया अविद्याया ब्रह्मणि सम्बन्धः सर्वथाऽसम्भव एव । अत एवैतत्कृतौ बन्धजीवभावावनादी इत्यपि परास्तम् ।

**पूर्वपक्षी**—छान्दोग्योपनिषदि विद्यमानं '**तत्त्वमसी**'ति महावाक्यं जीवब्रह्मणोरभेदं वदति । अभेदश्च यद्यविद्यासम्बन्धमहिम्ना नानारूपेषु प्रतीयमानं ब्रह्मैव जीवः स्यात्तदा संभवति । अतो लौकिकतर्कक्षपावैकल्येऽपि महावाक्यानुरोधेनायमुपरि परिदर्शितः सिद्धान्तः स्वीकरणीयः ।

## 'तत्त्वमसी'त्यस्यार्थविचारः ।

**सिद्धान्ती**—'**तत्त्वमसी**'ति वाक्यं 'महावाक्य'मिति भवद्भिः कथं कथ्यते ? । किमिदं संपूर्णप्रकरणस्यार्थं सङ्गृह्य कथयतीत्यतो महावाक्यम्, अथवा वाक्यसमूह–स्वरूपमिदमिति हेतोः ।

**पूर्वपक्षी**—अस्य संपूर्णस्य प्रकरणस्य तात्पर्यं जीवब्रह्माभेदप्रतिपादनमेव । तदेव च '**तत्त्वमसी**'ति वाक्यस्यापि । अत इदं 'महावाक्य'मिति कथ्यते ।

**सिद्धान्ती**—अत्र श्वेतकेतूपाख्याने प्रारम्भ एव '**अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवती**'ति श्रुत्या, वत्स ! तदपि जानीषे यस्मिन् ज्ञाते सर्वमपि ज्ञातं भवति, यथैकस्मिन् मृत्पिण्डे ज्ञाते सर्वाण्यपि मृण्मयवस्तूनि ज्ञातानि भवन्तीति श्वेतकेतवे तदीयतातेनोक्तम् । परन्तु मृत्तिकात्वेन यथा सर्वा अपि मृत्तिकाः परस्परमभिन्नास्तथा यस्य ज्ञानमिह कर्तव्यतया निर्दिश्यते तत्सर्वस्मादपि वस्तुजातादभिन्नं चेत्तदा संभवति । अभेदश्च घटमृत्तिकादृष्टान्तानुसारेणोपादानोपादेययोरेव भवितुमर्हति । अतोऽत्र प्रकरणे '**सदेव सौम्येदमग्र आसीत्**' इत्यादिभिः सृष्टिबोधिकाभिः श्रुतिभिर्ब्रह्मैव जगद्रूपेणात्मानं परिणमयामासेति ब्रह्मोपादानकारणं जगच्चोपादेयमिति प्रमाणीकृ-

तम् । अतः सर्वस्यापि प्रकरणस्य ब्रह्म सर्वात्मकमित्येव तात्पर्यार्थो, न तु जीवब्रह्माभेदः । इममर्थं च न केवलं 'तत्त्वमसी'त्यक्षरचतुष्टयं वक्ति, किन्तु **'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'**त्यष्टादशाक्षरात्मको भागो वक्ति । अत एतावानयं महावाक्यं, न तु 'तत्त्वमसी'ति ।

अस्य महावाक्यस्यायमक्षरार्थः—**सर्वमिदं** जडात्मकं प्रत्यक्षं जगत् **ऐतदात्म्यं** ब्रह्मस्वरूपम् । यस्य सृष्टिः पूर्वं 'सदेवे'त्यादिश्रुतिभिरुक्ता **तज्जगत्सत्यम्**, यतः **सः** परमात्मा **आत्मा** जडजीवयोः स्वरूपसमर्पकः । **तत्त्वं** परमात्मस्वरूपः असि । त्वमिति शेषः ।

**पूर्वपक्षी—'ऐतदात्म्यमिदं सर्वम्'** इति श्रुत्यंशः स्वस्मिन् वर्तमानेन 'सर्वं'पदेन जडजङ्गमात्मकं सर्वमपि जगद् ब्रह्म—स्वरूपमिति प्रमाणीकर्तुं शक्नोति । अतोऽयं केवलं जडवस्तुजातमेव ब्रह्म—स्वरूपं वक्तीति बोधकशक्तिसङ्कोचो नोचितः । किञ्चैतदात्म्य—पदस्य 'ब्रह्म—स्वरूप'मित्यर्थ इत्यत्रापि मूलं न पश्यामः । एवं 'तत्सत्यम्' इत्यत्र तच्छब्दस्य जगदर्थोऽपि न सङ्गतः । यत एतस्य समीपवर्तिनि 'तत्त्वमसी'ति वाक्ये तच्छब्दस्यार्थो ब्रह्मेति भूयसां विदुषां संमतम् । किञ्च जडात्मके जगत्युत्पत्तिनाशौ सर्वैरपि साक्षात्क्रियेते, अतोऽस्य सत्यत्वस्वीकरणं सङ्गतमपि न प्रतिभाति । 'तत्त्वमसी'ति महावाक्ये च 'तत्' 'त्वम्' इति पदद्वयं स्पष्टमेव पृथक् प्रतीयते, अतः 'तत्त्व'मित्येकं पदं मत्वा यद् ब्रह्म—सम्बन्धीत्यक्षरार्थः कथ्यते, तदपि साहसमात्रम् ।

**सिद्धान्ती—'ऐतदात्म्यमिदं सर्वं'**मिति श्रुत्यंशः स्वस्मिन् वर्तमानेन 'सर्वं'—पदेन जडजङ्गमात्मकस्य सर्वस्यापि जगतो बोधनाय न पर्याप्नोति, यतोऽत्र 'सर्वं'—पदेन सहेदं शब्दोऽपि विद्यते । 'इदं'—शब्दश्च केवलं प्रत्यक्षवस्तुवाची । अत एतत्सहचरः 'सर्वं'—शब्दोऽपि प्रत्यक्षं जडवस्तुजातमेव बोधयितुं शक्नोति, न त्वप्रत्यक्षाञ्जीवान् ।

किञ्चैतदात्म्य—शब्दो हि भावप्रत्ययान्तः, भावप्रत्ययश्च धर्मवाचकः, धर्मश्च सर्वदा धर्मिणा सम्बद्ध एवावतिष्ठते, अतोऽस्य ब्रह्मसम्बन्धीत्यक्षरार्थो नासङ्गतः । एवं 'तत्त्वमसी'ति वाक्येऽपि 'तत्त्व'मिति भावप्रत्ययान्तं पदम् । अतोऽस्यापि ब्रह्म—सम्बन्धीत्येव वस्तुतोऽक्षरार्थः । परन्तु शिलापुत्रिकायाः करचरणादीन्यङ्गानि यथा ततो न भिन्नानि, तथा ब्रह्मापि स्वधर्मेभ्यो जडजीवेभ्यो न भिन्नमिति द्वयोरपि भावप्रत्ययान्तयोरनयोर्ब्रह्म—स्वरूपमित्यर्थोक्तावपि न क्षतिः । अत एव 'तत्त्वमसी'ति वाक्ये 'तत्' 'त्वम्' इति पदद्वयस्वीकरणमपि न प्रतिकूलम्, किन्तु 'ऐतदात्म्य'मिति पदं भावप्रत्ययान्तमस्ति, अत एतत्समीपे पठितं समानार्थं च 'तत्त्व'मिति पदमपि भावप्रत्ययान्तमित्येव सुलभसंभावनम् ।

किञ्च 'तत्सत्यम्' इत्यत्र तच्छब्दार्थो जडजगदित्येव युज्यते, न तु ब्रह्मेति । यतो ब्रह्मणि तु **'असदेवेदमग्र आसीत्' 'कथमसतः सज्जायेते'**ति श्रुत्यंशेन पूर्वमेवासत्य-

---

१ सुवर्णसूत्राद्यनुसारेण, योजनाऽनुसारेण तु ब्रह्मैव ।

त्वशङ्का निरस्तेति न पुनः सत्यत्वोक्तिमपेक्षते, किन्तु जगत्युत्पत्तिनाशप्रभृतयो विकाराः प्रत्यक्षीक्रियन्ते, अतोऽस्य सत्यता न मतिमतां चेतस्यास्पदं लभते। 'ऐतदात्म्य'मित्यनेन च याऽस्य ब्रह्म–स्वरूपता प्रतिपाद्यते, साऽपि न समुचिता प्रतिभाति। अतोऽसत्यत्वशङ्काया निवृत्तये 'तत्सत्य'मित्यत्र तच्छब्देन जगद्बोधयित्वा तस्य सत्यत्वोक्तिरावश्यिकी।

किञ्च जगत्सत्यमिति कथनेन, जगति यावुत्पत्तिनाशौ प्रतीयेते तौ भ्रमलब्धजन्मानौ। वस्तुतः सर्वमपि वस्तुजातं सर्वदा वर्तत एव। केवलमाविर्भावतिरोभावाभ्यां वस्तूनां भावाभावावापातदर्शिभिर्लोकैः कल्प्येते। अतो जगन्नाविद्याकल्पितं मिथ्येति सिद्ध्यति।

## आविर्भाव–तिरोभावविचारः।

**पूर्वपक्षी**—उत्पत्तिविनाशयोः प्रतीतिर्भ्रम इति न केनापि वक्तुं शक्यते, यतो भ्रमस्योत्तरसमये बाधोऽनुभूयते। अनयोश्च न कदाचिदपि बाधो दृष्टचरः। किञ्चाविर्भावतिरोभावावुत्पत्तिनाशस्थानीयावेव, अतो यत्स्वरूपमुत्पत्तिनाशयोस्तदेवैतयोरपीति नाभ्यां जगन्नित्यतानिर्वाहः संभवति।

**सिद्धान्ती**—यद्यप्युत्पत्तिविनाशावाविर्भावतिरोभावस्थानीयावेव, तथापि नोत्पत्तिविनाशसमस्वरूपौ, यतोऽसत एवोत्पत्तिरङ्गीक्रियते युष्माभिर्नाशानन्तरमपि वस्तु चासदिति। वयं च वर्तमानस्यैव वस्तुन आविर्भावं, तिरोभावोत्तरमपि च वस्तु सदिति स्वीकुर्मः। अत आविर्भावतिरोभावाभ्यां जगन्नित्यता–निर्वाहो निर्विघ्न एव।

(१०) **पूर्वपक्षी**—अस्तु जगन्नित्यम्, परन्त्वाविर्भावतिरोभावौ नित्यावनित्यौ वा?। नित्यौ चेत्, परस्परं विरुद्धस्वभावतयैतयोर्द्वयोरेकस्मिन्नेव वस्तुनि स्थितिः सर्वदा न संभवति, यतो व्यवहारयोग्यतैव वस्तुन आविर्भावः, व्यवहारायोग्यता च तिरोभावः। जगति च नास्ति किमप्येवंविधं वस्तु यस्मिन्नेकदैव व्यवहारयोग्यता, तदयोग्यता चावतिष्ठेत। यद्यनित्यौ चेत्, सर्वं जगद्ब्रह्म–स्वरूपमिति भवत्सिद्धान्तस्य विघातः, यत एतावपि जगदन्तर्गतावेव, अनित्यतया च ब्रह्म–स्वरूपौ न भवितुमर्हतः।

**सिद्धान्ती**—यथा **'ऐतदात्म्यमिदं सर्वम्'** इत्याद्याः श्रुतयो जगद्ब्रह्मस्वरूपमिति वदन्ति, तथा **'आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः'** इति वचनमाविर्भावतिरोभावौ ब्रह्मणः शक्ती इति वदति। अतो यथा जगन्नित्यं तथेमावपि नित्याविति स्वीकर्तव्यम्। एतौ च भगवदिच्छानियमननिघ्नौ नित्यावपि न सर्वदा प्रतीयेते, किन्तु प्रतिवस्तु नियतसमयपर्यन्तमेव क्रमशः प्रतीयेते। अतः परस्परविरुद्धस्वभावयोरप्येतयोरेकत्राविरतमवस्थितिर्नासम्भवा।

**पूर्वपक्षी**—आविर्भावतिरोभावौ ब्रह्म–शक्तिस्वरूपाविति न वक्तुं शक्यते, यतो व्यवहारयोग्यता तदयोग्यता चैतयोः स्वरूपम्। एते च वस्तु–धर्मौ, कथमिव ब्रह्मणः

शक्ती भवताम्। किञ्च ब्रह्मणः शक्ती चेत्, कथमिव निजाधिकरणं तद्विहाय घटपटप्रभृतिषु प्रापञ्चिकपदार्थेष्वासाते। यतः शक्तिः शक्तिमन्तं परित्यज्य नान्यत्रावस्थातुमर्हति। यदि कथञ्चन ब्रह्मशक्ति–स्वरूपतैतयोः स्वीक्रियेतापि, परन्तु भवदुक्तवचने 'शक्ती' इति द्विवचनेनाविर्भावतिरोभावाभिधं शक्तिद्वयमेवेति सिद्ध्यति। तथा च सर्वेषां वस्तूनामाविर्भावोऽप्येकः, तिरोभावोऽपि चैक इति युगपदेव सर्वेषां व्यवहरणीयताऽव्यवहरणीयता च स्यात्।

किञ्च नित्ययोरप्याविर्भावतिरोभावयोः सर्वदा प्रतीतिर्न भवतीत्यत्र ब्रह्मण इच्छैव कारणमित्यपि कथनं निरर्थकमेव, यतो ब्रह्मण इच्छाऽपि नित्येति सैतयोः प्रतीती विभक्तकाले कर्तुं न शक्नोति। किञ्चैतदर्थमाविर्भावस्याविर्भावोऽपि भवता न स्वीकर्तुं शक्यते, यतस्तस्यापि नियतसमयपर्यन्तं प्रतीतिरावश्यिकीति पुनरन्य आविर्भावः स्वीकरणीयः स्यात्। एवं पूर्वपूर्वाविर्भावस्य नियतसमयपर्यन्तं प्रतीतिसिद्ध्य उत्तरोत्तराविर्भावस्वीकारेऽनन्ताविर्भावस्वीकारेणानवस्था दोषः स्यात्।

**सिद्धान्ती**—ब्रह्मैव जगद्रूपेण परिणतमिति जगद्ब्रह्म–स्वरूपमेव। अतोऽस्मिन्नाविर्भावतिरोभावाभिधयोर्ब्रह्मशक्त्योरवस्थितिरसम्भवा। किञ्च यथैकमपि सद्ब्रह्म नाना, तथा ब्रह्मशक्तिस्वरूपावाविर्भावतिरोभावावेकैकावपि प्रतिवस्तु विभिन्नौ प्रतीयेते इति नासङ्गतम्। यथा ब्रह्माद्भुतं, तथा ब्रह्मणः शक्तयोऽप्यद्भुता एव। अत एव **'परास्य शक्तिर्विविधैव श्रूयते'** इतिश्रुतिरेकस्या अपि ब्रह्मशक्तेर्विविधतां वदति। **'विश्लिष्टशक्तिर्बहुधेव भाती'**ति भागवतोक्तिरपि च भगवतः शक्तीनां बहुलीभवनं भणति।

## आविर्भावतिरोभावौ न सहस्थितिविरोधिनौ।

(१२) किञ्चाविर्भावतिरोभावयोर्ब्रह्मण इच्छायाश्च नित्यत्वेऽपि नाविर्भावतिरोभावयोः प्रतीतिनियमनसम्भवम्, यत इदं वस्तु अस्मिन् देशे काले चैभिर्हेतुभिराविर्भवत्विति ब्रह्मेच्छाया यो वस्तुभिः सह सम्बन्धः स आविर्भावः। इदं वस्तु अस्मिन् देशे काले च तिरोभवत्विति ब्रह्मेच्छाया यो वस्तुभिः सह सम्बन्धः स तिरोभावः। न तु व्यवहारयोग्यता तदयोग्यता चैतयोः स्वरूपम्। यतः **'एकोऽहं बहु स्यां' 'हन्त तिरोऽसानी'**ति श्रुतिद्वयीच्छाविषयत्वमेव (इच्छासम्बन्धित्वमेव) आविर्भावतिरोभावयोः स्वरूपमिति वक्ति, तच्चैतत्पर्यालोचितमुपरि परिदर्शितस्वरूपमेव पर्यवस्यति। किञ्चैतावेतादृशस्वरूपौ स्तः, अत एव विरुद्धस्वभावयोरप्येतयोरेकस्मिन् वस्तुनि स्थितिर्नासम्भवा। नापि च नियतसमयपर्यन्तमेतयोः प्रतीतिसिद्ध्य आविर्भावान्तरस्वीकरणमावश्यकम्।

किञ्चोपरि परिचायिते परमात्मेच्छास्वरूपे 'इदं'–शब्देन देशकालकारणानां विशिष्टस्व-

रूपाण्येव निर्दिष्टानि, न तु सामान्यस्वरूपाणि । अतोऽपि न कस्यापि पदार्थस्य सर्वदाऽऽविर्भावावस्थायां तिरोभावावस्थायां वाऽवस्थितिर्भवितुमर्हति ।

**पूर्वपक्षी**—पूर्वोक्ते परमात्मेच्छास्वरूपे यानि देशकालकारणानां विशिष्टस्वरूपाणि निर्दिष्टानि, तान्यपि स्वरूपसामान्यवन्नित्यान्येवेति सर्वदा वर्तन्ते । अतो भवन्मतानुसारेणैतयोर्नित्यत्वे प्रतिवस्तु संततं प्रतीतिरवश्यमेव भवित्री ।

**सिद्धान्ती**—पूर्वोक्तं परमात्मेच्छास्वरूपे निर्दिष्टानि देशकालकारणानां विशिष्टस्वरूपाण्यपि प्रकटान्येव ग्रहीतुमभिलषितानि सन्ति । अत एतानि परमात्मेच्छया यदा प्रकटीभवन्ति, तदैतत्सहायतासापेक्षाणि वस्तुस्वरूपाण्यपि परमात्मेच्छाऽनुसारेण प्रकटावस्थामप्रकटावस्थां वा प्राप्नुवन्ति । अतो न कस्याप्याविर्भावावस्था तिरोभावावस्था वा सर्वदाऽवस्थातुमर्हति ।

**पूर्वपक्षी**—देशकालकारणानां प्रकटस्वरूपाण्यपि नित्यतया सर्वदा वर्तन्ते । अतः पूर्वोक्तदोषः पुनरपि पूर्ववदवस्थित एव ।

**सिद्धान्ती**—पूर्वोक्तपरमात्मेच्छास्वरूपप्रविष्टानां विशिष्टदेशकालकारणानां प्रकटावस्थापि नित्यतया सर्वदा वर्तते, परन्तु परमात्मेच्छानियन्त्रणपरतन्त्रतयेयं सर्वकालं तु केवलं योगिव्यवहारविषयतामेव भजते, न तु सर्वसाधारणव्यवहारविषयताम् । अत एतत्सहायतासापेक्षाणि वस्तुस्वरूपाण्यपि न सर्वकालं सर्वसाधारणप्रत्यक्षे स्वात्मानं विषयीकुर्वन्ति, तिरोदधते वा ।

( १० ) **पूर्वपक्षी**—योगिनो योगबलेनासदेव वस्तु प्रत्यक्षीकुर्वन्ति । अतो योगिप्रत्यक्षं प्रमाणीकृत्य प्रकटदेशकालस्वरूपाणि सर्वदा वर्तन्त इति वक्तुं न शक्यते । वस्तुतस्तु, कस्यापि वस्तुन उत्पत्तेः पूर्वं नाशोत्तरं च सत्ता न स्वीकर्तुं शक्या, यतः **'प्रजाश्च तुल्यकालीया नाधुना सन्ति कालिताः'** इति वचनेन देवाः, त्वदीयराज्यसमये वर्तमानाः प्रजाः संप्रति न सन्तीति मुचुकुन्दनामानं नृपतिमवदन् । अतः प्रकटाप्रकटदशाद्वयीं कल्पयित्वा वस्तु सर्वदाऽवतिष्ठत इति कथनमनुचितमेव ।

## योगिनो विद्यमानमेव पदार्थं प्रत्यक्षीकुर्वन्ति ।

( १२ ) **सिद्धान्ती**—यदि योगिनोऽविद्यमानमेव पदार्थं प्रत्यक्षीकुर्वन्ति चेत्, तत्प्रत्यक्षं भ्रम एव, न प्रमाणीभवितुमर्हति । योगश्च शास्त्रोपदिष्टं साधनम् । अनेन परमात्मा साक्षात्क्रियते । अत एतेन भ्रमो भवतीति सर्वथा न संभवति । **'प्रजाश्च तुल्यकालीया'** इति वचनं तु प्राकृतजनसाधारणप्रतीतिमनुसृत्य वदति । अतोऽनेन पारमार्थिकी नित्यवस्तुसत्ता निषेद्धुं न शक्यते ।

**पूर्वपक्षी**—यदि वस्तु सर्वदा वर्तमानं चेद्, भूतभाविव्यवहारः कथं सङ्गच्छताम् ।

नाप्ययं व्यवहारो लौकिक एव, किन्तु **'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्'** इत्यादिवेदवचनेष्वप्युपलभ्यते। अतोऽयमप्रामाणिक इत्यपि न वक्तुं शक्यम्। अत एव न नित्यवस्तुसत्ता विश्वसनीया कस्यापि मतिमतो भवितुमर्हति।

## भूतभाविव्यवहारेण नित्यवस्तुसत्ता सिद्ध्यति।

(११) **सिद्धान्ती**—भूतभाविव्यवहारो, न वस्तुसत्ताया नित्यता निष्प्रमाणेति भणति, प्रत्युत भूतभावि-व्यवहारेणैव वस्तुसत्ताया नित्यता प्रमाणीक्रियते, यतो भूत-भावि-शब्दा हि धर्मबोधकाः। धर्माश्च न धर्मिणं विनाऽवस्थातुमर्हन्ति। यदि धर्मि वस्तूत्पत्तितः पूर्वं, नाशानन्तरं च वर्तमानं न चेद्, इमे धर्म-बोधकाः शब्दा यान्धर्मान् बोधयन्ति तेषामवस्थितिरसम्भवा स्यात्। पर्यवसानं चास्य भावित्वप्रभृतिधर्माणां भावि-भूतव्यवहारस्य चासत्यतायां स्यात्। अत एषामुपपत्तये धर्मिणो वस्तुनः सर्वदा सत्ताऽस्तीति स्वीकार आवश्यकः। किञ्च **'पुरुष एवेदं सर्वं'** इति श्रुतिरपि नित्यवस्तुसत्तां साधयत्येव, न तु निषेधति, यतः **'सर्वं खल्विदं ब्रह्मे'**ति श्रुतौ यथा 'इदं सर्वम्' इत्यंशेन सर्वाण्यपि भूतभाविवर्तमानानि वस्तूनि बोध्यन्ते, तथा **'पुरुष एवेदं सर्वम्'** इति श्रुतावपि 'इदं सर्वम्' इत्यंशेन भूतभाविवर्तमानानि सर्वाण्यपि बोधयितुं शक्यानि, तथाऽपि **'यद्भूतं यच्च भाव्यम्'** इत्यंशेन यो भूतभाविनोः पृथङ् निर्देशः कृतः, स इममेवाशयं प्रकाशयति-यानि भूतभावीनि वस्तूनि जनाः प्रत्यक्षास्पर्शितयाऽसन्तीति मन्यन्ते तानि नासन्ति, (नासत्यानि) किन्तु ब्रह्म-स्वरूपाणि सत्यान्येव। अनेनैवेदमपि प्रमाणीक्रियते, यत्सर्वाणि वस्तूनि यद्यपि नित्यतया सर्वदा वर्तमानान्येव सन्ति, परन्त्ववस्थाविशेषबोधको भूत-भाविव्यवहारो नैतेन बाधितुं शक्यः।

**पूर्वपक्षी**—'भूतभाविशब्दौ हि धर्मवाचकौ' इत्यत्र न किमपि प्रमाणमस्ति। व्यवहारे सर्वे, येन वस्तुना सह प्रागभावस्य सम्बन्धो (प्रतियोगित्वरूपः) भवति तद्भावीति वदन्ति, येन च सह ध्वंसनामधेयस्याभावस्य सम्बन्धो भवति तद्भूतमिति भाषन्ते। किञ्च **'पुरुष एवेदं सर्वम्'** इति श्रुतिरपि रागद्वेषादिदोषनाशपूर्वकं चित्तशुद्धिर्भवत्वित्येतदर्थं भूतभाविवर्तमानवस्तुषु ब्रह्मदृष्टिः कर्तव्येत्युपदिशति, अत एतया भूतभाविवस्तूनि ब्रह्मस्वरूपाणि सत्यानि सर्वदा वर्तन्त इति न सिद्ध्यति। अतः सार्वदिकवस्तुसत्तासिद्ध्ये भूतभाविव्यवहारस्यैतस्याः श्रुतेश्चोपन्यासप्रयासो विफल एव।

**सिद्धान्ती**—प्रागभावध्वंसयोर्यो वस्तुना सह सम्बन्धः सोऽपि धर्म एव। स च स्वधर्मिषु प्रागभावध्वंसेषु तत्प्रतियोगिषु घटपटप्रभृतिषु च वसति। यदि धर्मिणो घटपटादयः पदार्था उत्पत्तेः पूर्वं नाशानन्तरं च वर्तमाना न चेद्, आधाराभावेनास्य सम्बन्धस्य स्थितिरसम्भवा स्यात्। केवलं प्रागभावप्रध्वंसेष्वेव च नायमवस्थातुं शक्तः, यतः

सम्बन्धाः सर्वेऽपि स्वभावतोऽधिकरणद्वयीस्थायिन इति सर्वेषां संमतम् । अतो नित्यवस्तुसत्तास्वीकारस्तु भूयोऽप्यावश्यक एव ।

किञ्च ब्रह्मदृष्टिकरणोपदेशस्तु यथा '**पुरुष एवेदं सर्वम्**' इति श्रुतौ त्वया स्वीक्रियते, तथा '**सर्वं खल्विदं ब्रह्मे**'ति श्रुतावपि स्वीकरिष्यते । तथा च '**पुरुष एवेदं सर्वम्**' इति श्रुतावेव यो भूतभाविनोः पृथङ् निर्देशः कृतस्तस्य भवन्मते न किमपि स्वारस्यं सिद्ध्यति । सिद्ध्यति तूक्तरीत्या । अतोऽत्र श्रुतौ ब्रह्मदृष्टेरुपदेशो न निर्देष्टुं शक्यते ।

## भावित्वभूतत्वधर्मयोराधारो रविगतिस्तदुपलक्षितः समयश्च ।

**पूर्वपक्षी**—भावी भूतश्चेति समय–विशेषौ, समयविशेषो हि भगवत आदित्यस्य गतितो लब्धस्वरूपः । अतो भावित्वभूतत्वे भास्करगतावेव वसतो, न घटपटप्रभृतिषु पदार्थेषु । तथा च केवलमेतयोरेव स्थितये घटपटादिपदार्थ–सार्वदिकसत्तास्वीकारो नावश्यकः ।

**सिद्धान्ती**—यस्यां भावित्वभूतत्वधर्मौ मञ्जूरीक्रियेते सा सूर्यगतिः किं प्रागभावध्वंसाभावयोरवस्थितिसमये भाविनी भूता वर्तमाना वा ? । यदि भाविनी चेत्तस्यां भूतेति प्रतीतिरपि कथं न भवति, यतो भूतत्वमपि तस्यां वर्तत एव । यदि भूता चेद्भाविनीति प्रतीत्यापि तस्यां भवितव्यम्, भावित्वस्यापि तत्र सत्त्वात् । भावित्वं भाविन्यां गतौ, भूतत्वं च भूतायां गतौ वसतीति तु न केनापि कथयितुं शक्यम्, यतो भाविभूतगतयस्तदानीं विद्यमाना न सन्तीति भावित्वभूतत्वधर्मयोस्तासु वासोऽपि न संभवति । यदि सा सूर्यगतिर्वर्तमाना चेद्, भाविनी भूतेत्यपि सोच्यताम्, यतो भावित्वभूतत्वे अपि तस्यां स्त एव । किञ्चैताभिर्भानुगतिभिरुपलक्षिते कालेऽप्येवं विपरीतव्यवहारेण भवितव्यम्, यतः कालेऽपि भूतो भावी वर्तमानश्चेति व्यवहारो रविगतिमूलक एव ।

**पूर्वपक्षी**—पटो हि तन्तुभिर्विरच्यत इति तन्तवः कारणं, पटश्च कार्यम् । एतयोः कार्यकारणयोर्यः सम्बन्धः स समवाय इत्युच्यते नैयायिकैः । अयं समवायसम्बन्धस्तन्तुषु पटे च वसति । पटोऽपि च तन्तुषु । यथा पटः समवायश्चेति द्वयमपि तन्तुषु तिष्ठति, एवं कालेऽपि तिष्ठति, यतः कालः सर्वस्यापि वस्तुजातस्याधारः । परन्तु तन्तुष्वेव पटः 'समवाय'–सम्बन्धेन प्रतीयते, न काले, एवं भावित्वभूतत्वे अप्यादित्यगतौ काले वा वसतः, परन्तु न तत्रैतयोः प्रतीतिर्भवति, एतयोः प्रतीतिस्तु प्रागभावध्वंसाभावाद्यभावप्रतियोगिषु घटपटप्रभृतिषु पदार्थेष्वेव भवति ।

**सिद्धान्ती**—उपर्युक्त–पटदृष्टान्तेन नादित्यगतौ काले वा भावित्वभूतत्वप्रतीतिप्रसक्तेः प्रतिषेधः कर्तुं शक्यते, यतः पटः समवायसम्बन्धेन तन्तुषु, कालिकसम्बन्धेन च काले वसतीत्युभयत्राधारयोः सम्बन्धभेदात्समाना प्रतीतिर्न भवतीति युक्तमेव, परन्तु भवता-

मभिमतं भावित्वभूतत्वयोः स्वरूपमभावप्रतियोगित्वमेव, तच्च स्वरूपसम्बन्धान्नातिरिच्यते, स्वरूपसम्बन्धश्च स्वरूपात्मकत्वात्सर्वत्र स्वरूपेणैवावतिष्ठते, न तु सम्बन्धान्तरेण । तथा च भावित्वभूतत्वयोर्घटपटप्रभृतिषु काले च केवलं स्वरूपात्मकसम्बन्धेनैव स्थितिरस्तीत्युभयत्राधारयोः सम्बन्धभेदाभावेन तुल्यप्रतीतिरावश्यिकी ।

**पूर्वपक्षी**—यद्यपि भावित्वभूतत्वयोर्घटपटप्रभृतिषु काले चैकेन स्वरूपात्मक—सम्बन्धेनैव स्थितिरस्ति, तथापि घटपटप्रभृतिषु घटपटस्वरूपः सम्बन्धः, काले च कालस्वरूप इति स्वरूपभेदोऽवश्यमस्ति, अतस्तुल्या प्रतीतिरुभयत्र न भवतीति समुचितमेव ।

**सिद्धान्ती**—भवन्मतानुसारेण प्रागभावध्वंसाभावयोः समये भाविभूतवस्तूनां स्वरूपं नास्ति । अतस्तत्र वर्तमाना विलक्षणता कथं प्रतीतिभेदं कारयितुं क्षमेत ।

**भावित्वभूतत्वप्रतीतिकारको धर्मविशेषः कल्प्यते ।**

**पूर्वपक्षी**—यद्यपि प्रागभावध्वंसाभावयोः समये भाविभूतघटपटादीनां स्वरूपं न वर्तते, परन्तु भावित्वभूतत्वप्रतीतिरभावप्रतियोगिषु घटपटादिष्वेव भवति, काले च न भवतीति प्रतीतेर्भावाभाववेवेदृशं विशेषमिह कारणतया कल्पयतो यः सम्बन्धान्तरमनपेक्षमाण एव पूर्वोक्ताभावप्रतियोगिषु घटपटादिष्वेव भावित्वभूतत्वप्रतीती कारयेन्न काले ।

**सिद्धान्ती**—भावित्वभूतत्त्वप्रतीतिकारकस्य विशेषस्य कल्पना कुत्र कार्यते ?, किं भाविभूतवस्तूनां स्वरूपे, प्रागभावध्वंसयोर्वा, काले वा । भाविभूतवस्तूनां स्वरूप इति तु न वक्तुं शक्यते, यतो विशेषकल्पनाकाले तन्नास्त्येव । प्रागभावध्वंसौ यद्यपि विशेषकल्पनाकाले विद्येते, परन्त्वेतयोः कल्प्यमानो विशेष एतयोरेव भावित्वभूतत्वप्रतीतिं कारयितुं क्षमते, नैतयोः प्रतियोगित्वसम्बन्धवत्सु घटपटादिषु । यदि घटपटादय एतदभावद्वयीसम्बन्धिनः सन्तीत्यत एतयोर्वर्तमानो विशेषो घटपटादिषु भावित्वभूतत्वप्रतीतिं कारयति चेत्, कालेऽपि कारयिष्यति, यतोऽभावयोरेतयोः प्रतियोगित्वरूपः सम्बन्धो भावित्वभूतत्वापरपर्यायः कालेऽप्यस्तीति कालोऽपि तथाविध एव सम्बन्धी । यद्युक्तविशेषः काले कल्प्यते चेत्, सुतरां तत्र भावित्वभूतत्वप्रतीतिप्रसक्तिः ।

**पूर्वपक्षी**—यथा न्यायनयानुसारेण घटत्वादयो जातयो घटादिपदार्थैककुटीरा अपि प्रलयसमये घटादि—पदार्थेषु विलयं यातेषु कालमेव स्ववासशालां कल्पयन्ति, तथाऽपि घटादि—पदार्थानामेवासाधारणधर्मभूतास्ता इति सर्वैरपि यथापूर्वं स्वीक्रियत एव, घटादिपदार्थेष्वेव च स्वमात्मानं 'समवाय'—सम्बन्धेन प्रत्याययन्ति, न काले, एवमयं भावित्वभूतत्वप्रतीतिकारको विशेषोऽपि घटादिधर्मः, भूतभाविदशायां घटादीनामविद्यमानतया च काले वसति, परन्तु भावित्वभूतत्वप्रतीतिं घटादिष्वेव कारयति, न काले ।

**सिद्धान्ती**—भावित्वभूतत्वप्रतीतिकारको विशेषो नित्योऽनित्यो वा ? । यदि नित्यश्चेत्, सर्वदा विद्यमानतया वर्तमानावस्थायामपि भावित्वभूतत्वप्रतीतिं कारयिष्यति। यद्यनित्यश्चेद् भवद्भिरेवंविधो न कश्चन धर्मोऽङ्गीक्रियते यो धर्मिणोऽभावे काले वसेत्। अतो दृष्टान्ताभावेनास्य विशेषस्यापि धर्मिणां घटपटादीनामभावे काले स्थितिर्न श्रद्धातुं शक्यते।

**पूर्वपक्षी**—निर्णीयमानं वस्तु-स्वरूपं सर्वेष्वप्यंशेषु दृष्टान्तस्य सादृश्यं नापेक्षते, स्वनिर्णये यावानंश उपयुज्यते तावन्तमेव सदृशमपेक्षते । वयं चेह भावित्वभूतत्वप्रतीतिकारको धर्मविशेषः स्वधर्मिणां भाविभूतघटपटादीनामभावेऽपि काले वस्तुं समर्थ इत्येव निर्णेतुं कामनां कुर्मः । इयति निर्णये च घटत्वादयो जातयः स्वधर्मिणां घटपटादिपदार्थानामभावेऽपि काले वसन्तीत्येतावान् दृष्टान्तांशः पर्याप्तोत्येव । अतो घटत्वप्रभृतिजातीनां नित्यता नात्र दृष्टान्तीभवने बाधिका भवितुं प्रभुः ।

**सिद्धान्ती**—घटत्वादिजातीनां नित्यतैव, घटादिधर्मिणामभावे घटत्वादयो जातयः काले वसन्तीति सिद्धान्तस्वीकारे कारणम्, यतोऽस्यास्वीकारे नित्यता न निर्वोढुं शक्यते । परन्त्वयं भावित्वभूतत्वप्रतीति-कारको विशेषस्त्वनित्यः, अतोऽयं काले वसतीति स्वीकारे न किमपि कारणमिति न स्वीकर्तुं शक्यः ।

किञ्च यदीदृशस्य विशेषस्याप्याधारः कालश्चेत्, मिथ्या पदार्थस्याधारः काल इति कथं न मञ्जूरीक्रियते । यथाऽयं धर्मविशेषो नाममात्रेण भावात्मकताप्रतीतिं तन्वानोऽपि न कस्मिँश्चन समवायसम्बन्धेन वसति, तथा शशशृङ्गादिकमपि, अतो नैतयोः स्वरूपे कियदप्यन्तरम् । किञ्चेदृशविशेषस्वीकारापेक्षया तु भाविभूतवस्तूनि भाविभूतावस्थायामपि वर्तमानानि सन्तीति स्वीकार एव वरः, यतोऽसतः सत्तास्वीकारस्तूभयत्र भवन्मतानुसारेण सदृशः, परन्त्वेष विशेषनामा विलक्षणपदार्थो न कल्पनीयो भवतीत्येतावल्लाघवम् । यदि **'प्रजाश्च तुल्यकालीया'** इति वचनं विरुध्यत इति धिया न नित्यसत्तां मन्तुकामश्चेद् भवान्, वयमपि भवदभिमताय शशशृङ्गसहोदराय विशेषाय दूरत एव नन्तुकामाः स्मः ।

**पूर्वपक्षी**—यद्यपि भावित्वभूतत्वप्रतीतिकारको धर्मविशेषो न कस्मिँश्चन समवायसम्बन्धेन वसति, तथापि भावित्वभूतत्वप्रतीतिनिर्वाहायोपयुङ्क्ते, अतो नायमसन्निति वक्तुं शक्यते, यतोऽसन्तः शशशृङ्गादयः पदार्थाः न कदाचिदपि कार्यकारिणो भवन्ति । किञ्च घटादिधर्मिणामभावे कालं विनाऽन्यो न कश्चनास्याधारो भवितुं क्षमः, अतो गत्यन्तराभावेनास्य सत्ता काले स्वीक्रियते ।

**सिद्धान्ती**—अयं युष्माभिः सभाज्यमानो धर्मविशेष एव भावित्वभूतत्वप्रतीतिं कारयतीत्यत्र किमपि प्रमाणं नास्ति । भावित्वभूतत्वप्रतीतिं त्वस्मत्संमता नित्यवस्तुसत्ताऽपि

बाढं निर्वोढुं समर्थोऽस्ति। अतोऽस्य धर्मविशेषस्य मिथ्यापदार्थस्य च स्वरूपे न कियद्-प्यन्तरमिति नायमादरणीयो भवितुमर्हति।

**पूर्वपक्षी**—नित्यवस्तुसत्तायां स्वीकृतायां भाविभूतवस्तूनि भाविभूतावस्थायां वर्तमानानि सन्तीति सिद्ध्या भावित्वभूतयोर्निराधारतायाः परिहारस्त्ववश्यं जातः, परन्तु भावी भूतश्चेति व्यवहारस्य प्रामाणिकता तत्त्वस्पर्शिता च न सिद्धा, यतः सर्वदा वर्तमानं वस्तु न केनापि भावि भूतं चेति वक्तुं शक्यते। अत एतत्सिद्धये भूयोऽप्यस्मत्संमतविशेषस्य स्वीकारस्त्वावश्यक एव।

**सिद्धान्ती**—आविर्भावतिरोभाववशेन ये वस्तूनामवस्थाविशेषा अनुभूयन्ते, तेषामेव प्रत्यायनाय भूतभाविवर्तमानशब्दाः प्रयुज्यन्ते। यथाऽऽविर्भावतः पूर्वं वस्तु भावीति भण्यते, आविर्भावोत्तरं तिरोभावात्पूर्वं च वर्तमानमित्युच्यते, तिरोभावोत्तरं च भूतमिति भाष्यते। एवं च प्रकटावस्थायां वर्तमानमिति, अप्रकटावस्थायां च भावि भूतं चेति व्यवहारः सर्वत्र निरुपसर्ग एव, अतोऽस्य सिद्धयेऽसत्तुल्यस्य धर्मविशेषस्य स्वीकारो नावश्यकः।

## भावित्वभूतत्वप्रतीतिसंपादकस्य धर्मविशेषस्य स्वरूपं विचार्यते।

किञ्च सूक्ष्मेक्षिकया निरीक्षिते तु नित्यवस्तुसत्तास्वीकारं विना भवत्संमतो भावित्वभूतत्वप्रतीतिकारको धर्मविशेषोऽपि न सिद्ध्यति, यतोऽस्य स्वरूपम् 'अन्यसम्बन्धनिरपेक्षा भावित्वभूतत्वप्रतीतिकारकयोग्यते'त्येव भवद्भिः स्वीक्रियते, इदं च नानापदार्थघटितोऽनित्यः परिच्छिन्नधर्मः, भाविवस्तुनि भावित्वप्रतीतिकारकयोग्यता, भूतवस्तुनि भूतत्वप्रतीतिकारकयोग्यतेत्येवं भिन्नभिन्नरूपैर्नानापदार्थेषु वसति। तथा च यथाऽसंख्यघटव्यक्तीनां परिचायिकैकाऽवच्छेदिकाऽपरपर्याया घटत्वजातिरङ्गीक्रियते, तथाऽनेकानामेषां विशेषाणामपि कश्चनावच्छेदकापरपर्यायः परिचायकः स्वीक्रियताम्, यत एतं विना कुत्र २ भावित्वभूतत्वप्रतीतियोग्यताऽस्तीत्यनुगमो न कर्तुं शक्यते। अयं च परिचायको भवन्मतानुसारेण न भावित्वभूतत्वयोरन्यतर उभयं वा भवितुमर्हति, यतः संप्रतिपर्यन्तं भावित्वभूतत्वयोः स्वरूपमनिश्चितमेव। एषु विशेषेषु कश्चन व्यापकधर्मोऽप्यवच्छेदकतया न कल्पयितुं शक्यते, यत एते नानापदार्थघटित—स्वरूपाः सन्ति। यदि गत्यन्तराभावेन वस्तुसत्तैव परिचायिका स्वीक्रियते चेत्, उत्पत्तेः पूर्वं नाशानन्तरं चाविद्यमाना वस्तुसत्ता न तदानीं वर्तमानानामेषां विशेषाणां परिचायिका भवितुं प्रभुरिति वस्तुसत्ताया नित्यता मञ्जूरीक्रियताम्।

किञ्च भवत्संमतो धर्मविशेषस्तु सिद्धोऽपि स्वरूपमहिम्नाऽसिद्ध एव, यतोऽस्य स्वरूपेऽन्यसम्बन्धनिरपेक्षेत्येतावानंशो विशृङ्खलार्थ एव। तथाहि—अस्यांशस्य स्वरूपसम्बन्धा-

तिरिक्तसम्बन्धनिरपेक्षेत्यर्थः प्रदर्शयितुं शक्यः । स्वरूपसम्बन्धश्च स्वरूपात्मक एव । स्वरूपं चेह भाविभूतवस्तूनामेव वक्तुं शक्यते । तथा च भावित्वभूतत्वप्रतीतिकारको धर्मविशेषो भाविभूतवस्तूनां स्वरूपं सम्बन्धस्थानीयं कल्पयित्वा तस्मिन्नेव भावित्वभूतत्वप्रतीतिं कारयतीत्युक्तं भवति । इदं च भवत्सिद्धान्ते न कथमपि सङ्गच्छते, यतो भावित्वभूतत्वप्रतीतिसमयेऽविद्यमानं भाविभूतवस्तूनां स्वरूपं न सम्बन्धो भवितुमर्हति ।

किञ्च संयोगसमवाययोः स्वरूपमिव भूतभाविवस्तूनां स्वरूपं न सम्बन्धात्मकम्, किन्तु सम्बन्धकार्यकारितया सम्बन्ध इत्युच्यते । सम्बन्धकार्यं चेह भावित्वभूतत्वप्रतीतिसम्पादनादन्यन्न किमपि वर्तते । अतो भाविभूतवस्तुस्वरूपं यदा भावित्वभूतत्वप्रतीतिं कारयिष्यति तदेदं सम्बन्ध इति सिद्धं भविष्यति । अधुना तु भावित्वभूतत्वप्रतीतिकारको विशेष एव साध्यत इति तस्य कथैव का ? ।

यद्यपि 'अन्यसम्बन्ध–निरपेक्षे'ति 'विशेष'–स्वरूपान्तःप्रविष्टस्यांशस्य 'लौकिकालौकिकनिखिलज्ञानसाधनसम्बन्धनिरपेक्षे'त्यप्यर्थो भवितुमर्हति, परन्त्विदं पूर्वापेक्षयाऽपि नितरां निन्दास्पदम्, यतो नास्ति किमपीदृशं वस्तु विश्वेश्वररचनायां यन्निखिलज्ञानसाधनैरसम्बध्यमानं भवेत् । अतो युष्माभिः कल्प्यमानोऽयं धर्मविशेष एव निखिलज्ञानसाधनैरसम्बध्यमानो भावित्वभूतत्वप्रतीतिं कारयतीति न कस्यापि प्रज्ञावतः श्रद्धाऽऽस्पदं भवितुमर्हति ।

यदि चान्यसम्बन्धनिरपेक्षेत्यत्र केषाञ्चिदेव सम्बन्धानां नैरपेक्ष्यं विवक्ष्यते, न सर्वेषाम्, तर्हि 'अन्यसम्बन्धनिरपेक्षा भावित्वभूतत्वप्रतीतिकारकयोग्यते'ति लक्षणं येषां सम्बन्धो न निषिद्धस्तेषां ज्ञानसाधनानामपि परिचायकं भविष्यति, न केवलं युष्माकमभिमतस्य धर्मविशेषस्यैव । एतद्भिन्नश्च न कश्चन 'अन्यसम्बन्धनिरपेक्षे'त्यस्यार्थो भवितुं युक्तः । अतो भावित्वभूतत्वप्रतीति–कारको धर्मविशेषः सर्वथा स्वीकारानर्ह एव ।

## भावित्वभूतत्वयोः प्रत्यक्षे सन्निकर्षः ।

**पूर्वपक्षी**—साक्षात्कारे य इन्द्रिय–पदार्थयोः सम्बन्धः स सन्निकर्ष इत्युच्यते । स च सर्वत्र साक्षात्कारेषु भवतीति भावित्वभूतत्वयोः साक्षात्कारेऽपि तेनावश्यं भवितव्यम् । सोऽयमनेकदार्शनिकाङ्गीकृत–संयोग–समवाय–संयुक्तसमवायादिलौकिकालौकिकसन्निकर्षान्यतमस्तु न संभवति, भावित्वभूतत्वयोरधिकरणानामनभिव्यक्ततया सम्बन्धयोग्यताऽभावात् । अतो भावित्वभूतत्वयोः साक्षात्काराय भवद्भिरप्यवश्यं कश्चन विशेषः स्वीकर्तव्यः । तस्य च स्वरूपं पूर्वोपवर्णितविशेषस्वरूपान्न विभिन्नं भवितुमर्हति । अतो ये दोषा युष्माभिर्मदीयपक्षप्रतिक्षेपाय प्रदर्शितास्ते यौष्माकपक्षप्रतिक्षेपायापि बद्धपरिकरा एवेति ज्ञेयम् ।

**सिद्धान्ती**—भावित्वभूतत्वयोरधिकरणानि भाविभूतवस्तूनि योगिनः प्रत्यक्षीकुर्वन्तीति '**अनागतमतीतं चे**'ति वचनोपन्यासेन पूर्वं प्रमाणीकृतम् । अतो भावित्वभूतत्वयोः साक्षात्कारे योगजसन्निकर्षोऽस्तीत्यपि सुखावबोधम् । किञ्च मृत्तन्तुप्रभृतिभिरुपादानकारणैः सहेन्द्रियाणां संयोगो विद्यत एव । घटपटादीनि कार्याणि नित्यतया निजोपादानेष्वाविर्भावतः पूर्वमपि सन्तीति शास्त्रवचनैः पृष्ठगतैरनुमानतर्कैश्च सिद्ध्यति । कार्यकारणयोश्च समवाय-सम्बन्ध इति निर्विवादम् । अत इन्द्रियसंयुक्तेषूपादानकारणेषु समवायसम्बन्धेन वर्तमानानि यानि भाविभूतघटपटादीनि तत्र वर्तमानयोर्भावित्वभूतत्वयोर्बहिर्दृष्टिभिर्लोकैरपि क्रियमाणे साक्षात्कारे इन्द्रियसंयुक्तसमवेतसमवायसन्निकर्ष उपपद्यत एव । अतो नास्माकं भावित्वभूतत्वप्रतीतिसिद्धये युष्माभिः कल्प्यमानस्यासत्तुल्यस्य विशेषस्य स्वीकार आवश्यकः ।

**एकस्या एवेच्छायाः परस्परविरुद्धा नानाऽऽकारा भवितुमर्हन्ति न वा ?।**

( १२ ) **पूर्वपक्षी**—आविर्भावतः पूर्वं, तिरोभावतः परं च वस्तु कारणरूपेणावतिष्ठत इति तु नाविर्भावतिरोभावयोः स्वरूपविचारविरामतः प्रथमं केनापि कथयितुं शक्यम् । अयं विचारविरामश्च नाधुनाऽवधि लब्धावसरः, यतस्त्वया प्रथममेकस्या एव परमात्मेच्छायाः 'अमुकं वस्तु अमुकस्मिन् काले स्थले च प्रकटीभवतु, तिरोभवतु' इत्येवंरूपाः प्रतिवस्तु विभिन्ना नानाऽकाराः प्रदर्शिताः । ते च परस्पर-विरुद्धा विलक्षणा इति नैकस्या एवेच्छाया भवितुमर्हन्ति ।

यदीश्वरेच्छा अपि प्रतिवस्तु विभिन्ना नाना स्वीक्रियन्ते चेत्, अयं व्यर्थो विस्तारः । एवंविधनानेच्छास्वीकरणापेक्षया तु पूर्वोक्तस्य भावित्वभूतत्वप्रतीतिसम्पादकस्यैकस्य विशेषस्य स्वीकरणमेव रमणीयम् ।

किञ्च परस्पर-विरुद्धा नानेच्छा नेश्वरे नित्यमवस्थानाय समर्था इति नित्यत्वमप्यासां नाङ्गीकर्तुमुचितम् । अतः 'सर्वं नित्य'मिति भवत्सिद्धान्त एव ध्वस्तः ।

नित्यवस्तु-सत्तां प्रमाणीकर्तुं च त्वया पूर्वं शास्त्रवचनं वाऽनुमानतर्कादि वा न किमपि कथितम् । अतः शास्त्रवचनैरनुमानादिभिश्च वस्तुसत्ता नित्या प्रत्याय्यत इति तव वचः केवलं वञ्चनैव ।

**सिद्धान्ती**—ब्रह्मणा हि सर्जनावसरे 'अहं तेजो भवेयं, जलं भवेयं, जगती भवेय'मित्येवं प्रतिपदार्थं पृथक् २ इच्छा-स्वरूपं न प्रकटीकृतं, किन्तु सर्ववस्तुसम्बन्धिन्यैकैव प्रादुर्भावेच्छा प्रकटीकृता । अस्याः स्वरूप-परिचयः '**सोऽकामयत एकोऽहं बहु स्यां प्रजायेये**'ति श्रुतौ मिलति । एवमेव '**हन्त तिरोऽसानि**' इति श्रुतिः सर्ववस्तुस-

म्बन्धिनी तिरोभावेच्छाऽप्येकैवेति कथयति । अत इयमिच्छाद्वितयी प्रतिवस्तु विभिन्नेति न कस्यापि वेदादेशवशंवदस्य शिष्टस्येष्टं भवितुमर्हति ।

किञ्च सर्वेश्वरो यद्यद्वस्तुस्वरूपेणात्मानं परिणमयितुं कामयते, तेषां वस्तूनां सर्वांशेन स्वरूपपरिचयस्तु सर्वेश्वरस्यैवंप्रकारककामनायामावश्यक एव । अवलोकामहे किल लोके यन्निर्मास्यमानस्य वस्तुनः स्वरूपं निर्माता निर्माणपूर्वक्षणेषु चेतसि चिन्तयते, ततश्च निर्माति । कदाचन लौकिक—निर्माता प्रथमं स्थूलपरिचयेनाऽपि रचनायां प्रवर्तेत, ततश्च विशिष्टपरिचयं सम्पादयेदिति संभाव्यते, परन्तु परमात्मनि नैवं संभवति, यतः परमात्मनो ज्ञानं नित्यम्—एवंविधं ज्ञानं परमात्मनि पूर्वं नासीत्, इदानीं विद्यत इति न वक्तुं शक्यम्, अतः परमात्मनो नित्यज्ञाने सर्वाण्यपि वस्तुस्वरूपाणि सर्वांशेन सर्वदा प्रतिविम्बितानि सन्तीत्यकामतोऽपि मञ्जूरीकर्तव्यमेव । इच्छा च ज्ञान—गोचरमेव पदार्थं स्पृशतीति ज्ञानवदिच्छया सहापि सर्वेषां वस्तूनां सर्वांशेन सम्बन्धः स्वीकार्यः । इत्थं च, यथा ज्ञानस्यैकस्यापि प्रमाण—बलेन परस्परविरुद्धा नानाऽऽकारा अङ्गीक्रियन्ते त्वया, एवमिच्छाया अप्यङ्गीक्रियन्ताम् । यतो यद्वेदो वदति तन्निर्विवादं सर्वस्याप्यास्तिकस्य श्रद्धेयं भवत्येव ।

अत एव वस्तु—सत्तां नित्यां प्रमाणीकर्तुं यानि **'पुरुष एवेदं सर्वम्' 'अनागतमतीतं च'** इत्यादीनि वचनानि पूर्वं प्रदर्शितानि तान्येव शिष्टजनसन्तोषाय पर्याप्तान्यासन्, नैतदर्थमनुमानतर्कादीनां काप्यपेक्षाऽऽसीत्; तथापि शङ्काशीलानां सन्तोषपोषाय भूत—भावि—व्यवहारविचारतो लब्धावतारमनुमानमप्येकं निदर्शितम् । इदं च तदीयं स्वरूपम्—भूतभाविपदार्थां भूतभाविव्यवहार—समयेऽपि सन्तः, अनुभूयमानधर्मकत्वात् । वर्तमानकालीनकलशवत् ।

## वस्तुसत्ता सार्वदिकी ।

वस्तुनित्यता—प्रमाणीकरणक्षमाणि तर्कानुमानान्यपि कतिपयानि सांख्य—सिद्धान्ते दर्शितानि, तेषामाशयः कियानिहापि प्रकाशमुपनीयते—

( ११ ) स्वोत्पत्तितः पूर्वमपि वस्तु सदिति मन्तव्यम् । यतोऽसद् न सद् भवितुमर्हति । यथा खरो न तुरगः ।

( २ ) उत्पत्तितः पूर्वं वस्तुनः सत्ता स्वोपादानकारणे स्वीकरणीया । यतो यद्यत्रास्ति, तत्तत उत्पद्यते । यथा मृत्तिकातः कलशी । यद्यत्र नास्ति, तत्ततो नोत्पद्यते । यथा वालुकातस्तैलम् ।

( ३ ) यद्यत्र न विद्यते, ततोऽपि तद्यदि दण्डकुलालादि कारण कलाप—बलतः प्रादुर्भवितुं प्रभु चेत्, सर्वं सर्वत्रोत्पद्येत ।

( ४ ) सर्वमपि वस्तुजातं न निजोपादानतो विभिद्यते। अत उपादानं सच्चेत्, तदपि सदेवेति स्वीकार्यम्।

इतोऽप्यधिकमिमां वस्तुनित्यतां महाभारतान्तर्वर्तिन्याश्रमवासिक पर्वणि वर्तमानः कियान् कथा–भागः समर्थयते, यस्येह सारः समुद्धृत्य प्रदर्श्यते—

( १२ ) भूभारहाराय कृतावतारस्य हरेरिच्छया भारतीयसमरे यदा निखिलमपि कौरवकुलं कालकवलीकृतकायमजायत, तदा अवशिष्टा धृतराष्ट्रगान्धारी कुन्ती–प्रभृतयः शोकशङ्कुकीलितान्तःकरणा नितान्तं विकला आसन्, शोकशान्तये च सर्वे मिलित्वा भगवतो वेदव्यासस्याश्रममगमन्। तत्र भगवान् वेदव्यासः प्रथमं शोकशमन–साधनानि ज्ञानामृतवर्षीण्यनेकानि वचनान्युपदिदेश, परन्तु पश्चात् धृतराष्ट्रकुन्ती–प्रभृतीनां प्रार्थनामनुसृत्य समरे मृतानां पुनः प्रदर्शनमेव शोकशमन–साधनमिति निश्चिकाय, उवाच च धृतराष्ट्रादीन् 'सुर–सरिति स्नात्वा निशायामत्रायातव्यमिति। तदनुसारेण धृतराष्ट्रादयोऽपि तदानीं मुनि–सन्निधानतो निवृत्ता यथा समयं गङ्गामवगाह्य व्यासाश्रमं गताः। तदा भगवान् वेदव्यासोऽपि पूर्वं प्रज्ञाचक्षुषे धृतराष्ट्राय दिव्यचक्षुषी दत्वा, ततश्च गङ्गायां स्नानमाचर्य सर्वानपि भारतीय–समरे मृतानामन्त्रयामास। आमन्त्रणोत्तरं च त्वरितमेव दुर्योधनदुःशासनादिप्रधानं निखिलमपि सैन्यसंकुलं कौरवकुलं जलतः प्रकटीबभूव। आम्बिकेय–कुन्ती–कौन्तेयप्रभृतयश्च तत्र स्वसम्बन्धिनो जनान् निरीक्ष्य नितरामानन्दन्। प्रादुर्भूताः कौरवाश्च विविधैर्विहारैस्तां रात्रिं तत्रैव गमयित्वा प्रातः स्वानि २ विमानान्यारुह्य स्वस्थानोपस्थितये प्रतस्थिरे।

कथामिमां वैशम्पायनतो यदा जनमेजयः शुश्राव, तदा सोऽपि भवानिव 'सर्वं नित्य'मिति न श्रद्दधे, बभाषे चेदं वैशम्पायनाय "भगवन्। अयं समरे मृतानां पुनः पूर्वशरीरलाभः प्रादुर्भावश्चासम्भव इव प्रतिभाति।" तदा वैशम्पायनेन कथितम्—"शरीर–कारणानि पुरा कृतानि कर्माणि, पृथ्वी पानीयतेजोगगनाख्यानि पञ्चमहाभूतानि च नित्यानि सन्ति, अत एतैरुत्पादिता देहास्तदीयविशेषाश्च नित्या इत्यपि मञ्जूरीकार्यम्। आत्मानो नित्या इति तु सर्वस्याप्यास्तिकसमाजस्य संमतमेव। अतो मृतानां पुनः प्रदर्शने केवलमात्मनां देहादिभिः सह सम्बन्धोऽपेक्ष्यते। स हरेरिच्छया यदा संपद्यते तदा हरिर्येभ्यः प्रदर्शयितुमिच्छति ते यथापूर्वावयवान् सर्वानपि मृतान् पश्यन्त्येव। इहापि भगवान् वेदव्यासो धृतराष्ट्रादिभ्यो भारतीय–समरे मृतान् कौरवान् दर्शयितुमभिललाष, अत एतस्य तपःप्रभावतः प्रादुर्भूतास्ते स्वेषु पूर्वशरीरेषु प्रविश्य दृष्टिपथमुपागमन्।"

## देहे आत्मबुद्धिरेव देहलाभहेतुः।

इतः परं च शरीरप्रवेशस्य स्वरूपं परिचाययन्निदमवदद् वैशम्पायनः—'अयं देहो

ममात्मेति बुद्धिरेव सर्वेषां शरीराश्रयणे कारणम् । भेदः केवलमियानेव यत्संसारिणो मोहवशाः शरीरेष्वात्मबुद्धिं कुर्वते, अत एषात्मबुद्धिर्मोहमूला मिथ्या च, परन्तु मुक्तात्मानः 'प्राणन्नेव प्राणो भवति वदन्नेव वाग्भवती'ति श्रुतिश्राविता सर्वस्वरूपतां प्राप्नुवन्ति, अत एषामात्मबुद्धिर्वास्तविकी ।' एतेन यथाऽविदुषः शरीर-लाभस्तथा विदुषोऽपि भवितुमर्हतीति सिद्ध्यति ।

एतावता सकलेन कथाभागेन "वस्तु नित्यं-सर्वदा विद्यते, केवलं तिरोभाववशादेवादीर्घदर्शिनामसदिति मतिर्भवती"ति स्पष्टमेव सोपपत्तिकं प्रमाणीक्रियते ।

इत्थमेव श्रीकृष्णस्य मृतगुरुसुतानयनं, द्वारकावासिद्विजतनुजानयनं, निजाग्रजानयनं च वस्तु-नित्यतां समर्थयते ।

## वस्तूनि स्वरूपेण नित्यानि, प्रवाहतो वा? ।

**पूर्वपक्षी—"वाचाऽऽरम्भणं विकारः" "क्षीयन्ते चास्य कर्माणि"** इत्याद्यनेकवेदवचनैः पृथिव्यादिपञ्चक-रचितमेतज्जगद् जगदन्तर्गतानि कर्माणि चासत्यानीत्युच्यते, अतो 'महाभारते मृतानां देहानि दग्धान्यपि न नष्टानि, क्वचन प्रच्छन्नमविकलान्येवासन्, तानि च भगवता वेदव्यासेन दर्शितानी'ति न कस्यापि विश्वसनीयं भवितुमर्हति ।

किञ्च वैशम्पायनोऽप्येवंविधनानाप्रमाणवचन-विरुद्धां नैषां नित्यतां वक्तुं क्षमते । यच्च तेन **'महाभूतानि नित्यानि'** इत्यादिभिः कतिपयवचनैरेषां नित्यत्वमुक्तं, तदपि तात्पर्यत एषां प्रावाहिक-नित्यतायां विश्राम्यति । यत एतस्मिन्नेव प्रकरणे **'अविप्रणाशः सर्वेषां कर्मणाम्'** इति वचने 'सर्वेषा'मिति पदं "कर्म-प्रवाहस्य नित्यतया सर्वेषां कर्मणां नाशो न कथमपि भवितुमर्हती"त्याशयं प्रकाशयितुमेव पठितम् । यदि "स्वरूपतः कर्माणि नित्यानी"ति वक्तुं वाञ्छितं चेत् 'अविप्रणाशः कर्मणा'मित्येव वदेत् । इत्थं च नित्यतावर्णनपरेणानेन संपूर्णप्रकरणेन वैशम्पायन इदं वक्तुमिच्छति—"मृतानां पूर्वशरीरभोग्यं प्रारब्धशेषं द्रष्टॄणां कर्माणि चाश्रित्य भगवता वेदव्यासेन स्वतपःप्रभावतः पूर्व-शरीरसदृशानि मायिकशरीराण्युत्पादितानि, तेषु च मृतानामात्मानः संयोजिताः ।" अतस्त्वदभिप्रायानुरूपं 'स्वरूपतो वस्तु नित्य'मिति प्रमाणीकर्तुमेतस्य कथाभागस्योपयोगो न कर्तुं शक्यते । एवमेव श्रीकृष्णस्य मृतनिजाग्रजाद्यानयनमपि मायिकमस्तीति न तस्यापि वस्तुनित्यतासत्यापन उपयोगो भवितुमर्हति ।

किञ्च परस्पर-विरुद्धानां भावित्व-भूतत्व-वर्तमानत्वप्रभृतीनां धर्माणामेकस्मिन्नेव वस्तुनि नित्या स्थितिरिति तु न केनापि मतिमता मञ्जूरीकर्तुं शक्यते । पर्यायेण स्थितिश्चे-

त्सिद्धमेषामनित्यत्वम् । अत एव पूर्वोक्तैर्भावित्वभूतत्वव्यवहारमूलैरनुमानतर्कैः सर्वस्य नित्यतासिद्धये पराक्रमप्रदर्शनं व्यर्थमेव ।

**सिद्धान्ती**—वेदव्यासेन धृतराष्ट्रादिभ्यो मायिककौरवशरीराणि दर्शितानीति न वक्तुं शक्यते, यतस्तेभ्यो दत्तः सुरसरित्स्नानोपदेशो व्यर्थीभवति । नह्यैन्द्रजालिककृतक्रीडनकनिरीक्षणाय स्नानमपेक्ष्यते ।

किञ्च कौरवाणां शरीराणि मायिकानि चेत् पत्नीनामेभिः सह वर्ण्यमानो विहारो न कथमपि सङ्गतो भवति, यतो मायिकपतिभिः सह विहारकरणमपि पातिव्रत्यं नाशयत्येव । जालन्धररूपप्रतिच्छन्नेन भगवता सह विहरणाज्जालन्धरपत्न्याः पातिव्रत्यं प्रणष्टमिति जालन्धरोपाख्याने प्रसिद्धमेव ।

किञ्च भगवान् वेदव्यासः पातिव्रत्यप्रणाशकमीदृशं कर्म न निषेधेदित्यपि न संभाव्यते, यतः अप्रतिषिद्धमनुमतं भवतीत्यभियुक्ताः ।

किञ्च जनमेजयो यदा **'कथं च त्यक्तदेहानां पुनस्तद्रूपदर्शनम्'** इति वैशम्पायनमपृच्छत्, तदा तेन स्पष्टमेवं कथं नोत्तरितं 'यद् व्यासदर्शितानि कौरवशरीराणि पूर्वशरीरसदृशानि मायिकानि शरीरान्तराणि, न तु पूर्वशरीराण्येव ।' एवमनुक्त्वा कर्मपञ्चमहाभूतप्रभृतीनां नित्यतां किमर्थमकथयत् । किञ्च त्वदभिप्रायानुरूपं तात्पर्यमस्योत्तरस्य तेन प्रतीतम् ? । यदि **'अविप्रणाशः सर्वेषा'**मिति वचनेन मृतोत्थितानां पौर्वदैहिकं प्रारब्धशेषं प्रमाणीकर्तुं प्रवाहरूपेण कर्माणि नित्यानीत्युक्तं चेद्, महाभूतशरीरादयो नित्या इति किमर्थमुक्तम् ? । किमेषामपि कश्चनेदृशोंऽशोऽवशिष्टः, येन वैशम्पायन इमान् नित्यान् कथयति । यदि नास्ति चेत्, महाभूतशरीराकृतिकर्माणि प्रवाहरूपेण नित्यानीति कथनं प्रकृतेऽनुपयोगान्निष्फलम् । अतो वस्तुत एतानि नित्यानीत्यङ्गीकार्यम् । अत एवात्र प्रकरणे मायिकवस्तुप्रदर्शनवर्णनं वर्तत इत्यपि न वक्तुं शक्यते । एवमेव श्रीकृष्णस्य निजाग्रजाद्यानयनमपि न मायिकमिति सिद्ध्यति, यतो मायिकत्वे दर्शनाभिलाषिणां परोक्षं सर्वत्रापि मायिकपदार्थस्योत्पत्तिः संभवतीति श्रीकृष्णस्य निजाग्रजलाभाय पातालादि–गमनं व्यर्थीभवति । अत एतत्सर्वमपि वस्तुनित्यता–प्रमाणीकरणाय पर्याप्तबलम् ।

### 'वाचारम्भण'मिति श्रुतिर्जगत्सत्यमिति वक्ति ।

( १४ ) किं च **'वाचाऽऽरम्भणं विकार'** इति श्रुतिं पुरस्कृत्य जगदसत्यमिति कथनमपि न रमणीयम्, यत एतस्याः श्रुतेर्जगदसत्यमिति नार्थः, किन्तु जगद् ब्रह्मतोऽभिन्नमित्यर्थः । अयमेव च भगवता वेदव्यासेन **'तदनन्यत्वमारम्भणशब्दादिभ्यः'** इति सूत्रेण दर्शितः । अत्र सूत्रेऽपि यदि जगदसत्यता वक्तुं वाञ्छिता चेत्, तदसत्यत्वमित्येव

वदेत्, न तु तदनन्यत्वमिति । यतः 'अनन्य'-शब्दस्य सर्वत्राभेद एवार्थो भवति, न त्वसत्यत्वम् । संभवति च मुख्येऽर्थे गौणार्थग्रहणं नोचितं भवति ।

किञ्च अस्यां श्रुतौ जगदसत्यता-निरूपणं प्रकरणानुरूपमपि नास्ति, यत इयं श्रुतिश्छान्दोग्योपनिषदि संपूर्णैवं समुपलभ्यते—

**यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् ।**
**वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।**

अर्थः—**सौम्य** हे शान्तस्वभाव! (श्वेतकेतो) **यथा** येन प्रकारेण **एकेन मृत्पिण्डेन** एकेन मृत्तिकापिण्डेन **सर्वं मृण्मयं** सर्वे मृत्तिका-निर्मिताः पदार्थाः **विज्ञातं स्यात्** विज्ञाता भवन्ति । **विकारः** मृत्तिकामयपदार्थाः मृत्तिकातो भिन्ना इति प्रतीति-सम्पादको विकारः **वाचाऽऽरम्भणं** वाचा आरभ्यते अस्तीति कथ्यते, न तु तदस्ति । **नामधेयं** अवस्थाविशेष-बोधकानि घटशरावादीनि नामानि । कारणस्यैव सन्तीति शेषः । **मृत्तिकेति** मृत्तिका-रूपेण । घटशरावादीनि वस्तूनीति शेषः । **सत्यमेव** सत्यान्येव सन्ति ।

अस्याः श्रुतेः पूर्वमुक्तोपनिषदि **'येनाश्रुतं श्रुतं भवति'** इति प्रतिज्ञावचनं विद्यते । अस्मिन् वचने ब्रह्मणो ज्ञानेन सर्वस्यापि ज्ञानं भवतीत्युक्तम् । इदं च कथं भवतीति दृष्टान्तापेक्षायां **'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्'** इत्येतावता यथैकमृत्तिकापिण्डज्ञानेन सर्वे मृण्मयपदार्थाः परिज्ञाता भवन्तीति दृष्टान्त उक्तः । कुत एवमिति कारणापेक्षायां च **'वाचारम्भण'**मित्यादिना **'सत्य'**मित्यन्तेन भागेन मृत्तिका-मृत्तिकानिर्मितवस्तूनां च परस्परं भेदो नास्ति, मृत्तिकारूपेण सर्वेषामैक्यमेव । लोके च मृत्तिकामानयेत्युक्ते न कश्चन घटमानयति, घटमानयेत्युक्ते च न मृत्तिकामानयतीति यो व्यावहारिकभेदो दृश्यते, सोऽयं केवलं (वाचाऽऽरम्भणम्) कथनमात्रं, न तु वस्तुतः सत्यः, यतो मृत्तिका-निर्मितवस्तून्यपि वस्तुतः मृत्तिकैव । अस्य सर्वस्यापि तात्पर्यमिदम्—यथा मृत्तिका न मृत्तिकानिर्मितवस्तुभ्यो भिन्नास्तीति मृत्तिका-ज्ञानेन सर्वेषामपि मृत्तिकानिर्मितवस्तूनां ज्ञानं जायते, इत्थं ब्रह्मापि स्थावरजङ्गमात्मकाज्जगतो न भिन्नमिति प्रतिज्ञावचनोक्तं ब्रह्मज्ञानमूलकं जगतो ज्ञानं युक्तमेव ।

## विरोध-प्रतीतिरीश्वरेच्छाधीना ।

(१२) अस्मिन् स्वाभिन्ने जगति ब्रह्मणा स्वेच्छया व्यवहारविधये धर्माणां तिरोभावेन नाना पदार्थभेदाः कल्पिताः । अतो भावित्वादयो धर्माः सर्वत्र सन्तोऽपि न सर्वदा प्रतीयन्त इति समुचितमेव, परन्तु यत्र ब्रह्म समकालमेव सर्वेषामेषां प्रतीतिं कारयितुमिच्छति तत्र प्रतीयन्ते अपि । अत एव विश्वरूपावलोकनसमये श्रीकृष्ण-वदने कौरवाणां भावी विनाशः प्रत्यक्षीकृतोऽर्जुनेन, । यदि भावी विनाशस्तदानीं वर्तमानो न

चेत्, प्रत्यक्ष एव न भवेत् । अतो भावित्वादिधर्माणामेकस्मिन्नेव वस्तुनि सर्वदा स्थितिर्न विरुद्धा ।

( १३ ) शब्दप्रामाण्य–प्रसङ्गे च श्रीमदाचार्यचरणैस्तत्त्वदीपनिबन्धे इदमुपदिष्टम्— '**सर्वं ब्रह्मे**'ति श्रुतिर्वदति । अतः शब्दोऽर्थश्च द्वयमपि ब्रह्मैव । ब्रह्मणि च सर्वाः शक्तयः सर्वे धर्माः सर्वदा वसन्ति । तथा च ब्रह्म–स्वरूपाः शब्दाः सर्वेषामर्थानां बोधाय समर्थाः सन्ति, अर्थेषु च सर्वेषु शब्दप्रवृत्ति–निमित्तीभूताः सर्वे धर्माः सर्वदा सन्तीत्येतेन सिद्ध्यति । अत एव च 'वह्निः शीत' इत्यादीनि लोकदृष्ट्या बाधितार्थबोधकान्यपि वचनान्यप्रमाणमिति वक्तुं न शक्यते, परन्तु परमात्मना व्यवहारसिद्धये शब्दानामर्थबोधकशक्तिं सङ्कोच्य, अर्थेषु च धर्मान् न्यूनाधिकतया तिरोभाव्य यो विभेदः कृतः, तदनुसारेण यावत् '**सर्वं खल्विदं ब्रह्मे**'त्यादिवेदवचनैर्निदर्शितमखण्डब्रह्मात्मकज्ञानं न संपद्यते, तावदस्माभिरङ्गीकृतैः श्रुतिसूत्रादिप्रमाणैरेव निर्णेयं, पश्चात्तु न क्वापि विरोधो भेदो वा प्रतीयत इति सर्वं प्रमाणमेव ।" अनेन कथनेनापि "वस्तूनां परस्परं न कश्चन स्वाभाविको भेदो विरोधो वा, केवलं हरेरिच्छया जात इति यत्र तदिच्छाऽनुकूला भवति तत्र प्रतीयते, न सर्वत्र । अतो भावित्वभूतत्वाविर्भावतिरोभावोपलम्भानुपलम्भादि–धर्माणां नैकत्र वस्तुनि स्थितिर्विरुद्धा । अत एव भूतभाविव्यवहारमूलानामनुमानतर्काणामपि पूर्वोक्तरीत्या सार्वदिकवस्तुसत्ता–साधने निर्विघ्न उपयोग" इति सिद्ध्यति । इत्थं च '**तत्सत्य**'मिति श्रुत्युक्त–सत्यतायां न कोऽपि शङ्कालेशशेषः ।

## जगत्सत्यता–वादीनि वचनानि ।

किञ्च वेद–व्याख्यारूपेषु पुराणेष्वपि जगतः सत्यतां वदन्ति वचनान्यनेकानि सन्ति, येभ्यः कतिपयानि प्रसिद्ध–वचनानि समुद्धृत्येह प्रदर्श्यन्ते—

**तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।**
**आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ १ ॥**

अर्थः–संपूर्णः प्रपञ्चो विकाररहितो नित्यश्च वर्तते । अस्मिन् यावुत्पत्तिनाशौ प्रतीयेते तावाविर्भावतिरोभावाभ्यां न भिन्नौ ।

**विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया ।**
**यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम् ॥ २ ॥**

अर्थः–इदं जगत् केवलं ब्रह्मैव । विष्णोर्माययाऽवस्थितमस्ति । यादृशमिदमिदानीं विद्यते तादृशमेव पूर्वमासीत्, पश्चाच्चावस्थास्यते ।

## असत्यः संसारो, न तु जगत् ।

( १५ ) पूर्वोक्तैरनुमानतर्कैस्तथा शास्त्रवचनैश्च जगत्सत्यमिति कथ्यते । अतः पुराणेषु क्वचन २ यज्जगदसत्यमित्युक्तं, तद्वैराग्योपयोगीति मन्तव्यम् । किञ्च क्वचन मायिकभ्र-

मतः प्रतीतानि वस्तु-स्वरूपाणि, यानि च 'विषयता' 'आन्तरालिकसृष्टि'रित्यादिशब्दैर्बोध्यन्ते, तानि लक्ष्यीकृत्यापि जगदसत्यमिति कथ्यते ।

परन्तु पुराणेषु यत्संसारस्यासत्यत्वमुक्तं तद्वास्तविकमेव, यतः 'संसार' इति नाम न जगतः, किन्तु अहन्ताममता-मूलकारणस्याभिमानस्य । अत्रेदं वचनं प्रमाणीभवति—

**नैवात्मनो न देहस्य संसृतिः सुविविक्तयोः ।**
**अविवेकस्तयोर्योऽसाविह तस्यैव संसृतिः ॥**

अर्थः—देहात्मनोः स्वरूपविवेकोत्तरं न संसारस्याभ्यां सह कश्चन सम्बन्धः । यतो देहात्मनोरज्ञाननिबन्धनोऽभेदाभिमान एव 'संसार'-पदवाच्यः ।

**ब्रह्म मायया संसारं सृजति, नात्मना ।**

ब्रह्म मायया संसारं सृजति । अतोऽयं मायिको मिथ्या, न तु भगवद्रूपः । किञ्च ब्रह्म-ज्ञानेन संसारो नश्यतीत्युल्लेखो यत्र २ स्याच्छास्त्रेषु तत्र २ सर्वत्रापि 'संसार'-शब्दस्यायमेवाभेदाभिमानोऽर्थो, न तु जगदिति बोद्धव्यम् । यतोऽयमविवेक-कृत इति ब्रह्मज्ञानेनास्य नाशो भवितुमर्हति, न तु ब्रह्म-स्वरूपस्य प्रपञ्चस्य ।

**जगत् 'संसार'-शब्दवाच्यमसत्यं च ।**

( १४-१५ ) **पूर्वपक्षी—'य एष संसारतरु'**रिति भागवतोक्तवचने जगतो बोधाय 'संसार'-शब्दः प्रयुक्तः । इतः परं च **'मायामयं वेद स वेद वेदम्'** इत्यनेन 'संसार'-शब्दवाच्यं जगदसत्यमित्युक्तम् । किञ्च **'तस्मादिदं जगदशेषमसत्स्वरूपम्'** इति वचने तु साक्षात् 'जगत्'-शब्देन बोधितस्य जगतो मिथ्यात्वमुक्तम् । अतो जगत्संसारौ भिन्नौ जगच्च नासत्यमिति न केनापि श्रद्धातुं शक्यते ।

इदमपीह न वक्तुं शक्यते 'यदिमानि जगदसत्यतावादीनि वचनानि वैराग्यार्थानि, नैतैर्जगन्मिथ्येति सिद्ध्यतीति', यतः **'तदेतज्जडमोहात्मकमनन्तं तुच्छमिदं रूपमस्य'** इति नृसिंहोत्तरतापिनीश्रुतिरपि जगन्मायोत्पादितं तुच्छं चेत्यादिना जगतो मिथ्यात्वं वक्ति । वैराग्यार्थं वक्तीति च न स्वीकर्तुं शक्यते, यतः श्रुतयो हि नरेशवन्निःसङ्कोचमपेक्षाऽनुरूपमेवार्थमुपदिशन्ति, न तु पुराणानीव प्रवर्तमानानां रुचेरानुकूल्याय किमपि गौणमधिकं वा कथयन्ति । किञ्च वयं तु क्वचनांशे श्रुतिषु गौणमर्थमपि स्वीकुर्मः, परन्तु भवन्तस्तु न क्वचिदपि स्वीकुर्वन्ति । अत उक्ततापिनीश्रुतावपि जगन्मिथ्येति कथनं वैराग्यार्थं गौणमिति नाङ्गीकर्तुं शक्यते । अत एव जगदसत्यतावादीनि पुराणवचनान्यपि न वैराग्यार्थानि । यानि च वचनानि जगन्नित्यमिति कथयन्ति तेषां 'जगत् प्रवाहरूपेण नित्य'मित्याशयो, न तु स्वरूपत इति । अतः कस्यापि प्रमाण-वचनस्य विरोधोऽपि नास्ति । इत्थं च 'जगज्जीवाविद्यया ब्रह्मणि कल्पितं विद्यते, ब्रह्मज्ञानेन च नश्यती'ति स्वीकरणं रमणीयमेव ।

## सांख्येन स्वीकृता सृष्टिरसत्या, न तु वैदिकी सृष्टिरसत्या।

**सिद्धान्ती**—नृसिंहोत्तरतापिनीश्रुतिर्जगदसत्यमिति न वक्ति, किन्तु प्रतीयमानभेद-कारणीभूतं वैलक्षण्यं प्रतिषिध्यास्य जगतो ब्रह्मणा सहाभेदं वदति, यत इतः पूर्वं **'नह्यस्ति द्वैत-सिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव'** इति श्रुतावभेद एव वर्णितोऽस्ति। इतः परमपि **'सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः'** इति जड—जीवयोः सर्वमयत्वमुक्त्वा भेदो निषिद्धोऽस्ति। अतो मध्यवर्तिन्यां प्रस्तुतश्रुतावप्यभेद-सिद्धिफलको भेदकारणनिषेध एव प्रकरणानुगुणः। एवमेव **'सर्वं खल्विदं ब्रह्म'** **'ऐतदात्म्यमिदं सर्वम्'** इत्यादिवेदवचनानामप्यर्थो जगद्ब्रह्माभेद एव, न तु जगतो मिथ्यात्वसाधनायाभेदप्रतिपादनविधया जगन्निषेधः। अत एव **'य एष संसारतरुः'** इत्यादिपुराणवचनेष्वपि जगन्मिथ्यात्वकथनं वैराग्योपयोगीत्येव मन्तव्यम्। यतः पुराणानि वेदविवरणरूपाणि सन्ति, नैतानि वस्तुतो जगन्मिथ्येति वक्तुं क्षमाणि।

**'य एष संसारतरुः'** इति वचने जगतो बोधाय 'संसार'—शब्दस्य प्रयोगस्तु 'अहन्ता—ममतारूपस्य संसारस्यास्पदं जगदस्तीति तात्स्थ्यसम्बन्धनिबन्धनां गौणीं वृत्तिमाश्रित्य कृतोऽस्ति। अतो नैतेन जगत्संसाराभेदः सिद्ध्यति। अत एव **'अविवेकः संसार'** इति वदतः **'अविवेकस्तयोर्योऽसाविह तस्यैव संसृतिः'** इति वचनस्यापि न विरोधः।

## जगज्जीवाविद्यया कल्पितं नास्ति।

किञ्च ब्रह्मणि जगज्जीवाविद्यया कल्पितमिति न केवलं प्रमाणविरुद्धं, किन्तु युक्ति-विरुद्धमपि। तथाहि—अप्रत्यक्षं ब्रह्म, अप्रत्यक्षे च भ्रमेण न कस्यचन कल्पना कर्तुं शक्यते। शुक्तावपि रजतस्य कल्पना तदैव भवति, यदा शुक्तिः प्रत्यक्षीभवति। अतो ब्रह्मण्यपि प्रपञ्चपरिकल्पना तदैव संभवति, यदा ब्रह्म प्रत्यक्षं भवेत्। किञ्चाद्वैतभङ्गभिया भवद्भिरविद्याऽसतीति स्वीक्रियते। असती च न प्रपञ्चपरिकल्पनाय प्रभवति, यतो हि कार्यमसत्यं भवितुमर्हति, न कारणम्। विलोक्यते हि लोके यदैन्द्रजालिकेन दर्शितं वस्तुजातमनृतं भवति, परन्तु यया तत्प्रदर्श्यते सा विद्या नासती भवति।

## ब्रह्मज्ञानेन संसारस्य लयो, न जगतः।

किञ्च ब्रह्मज्ञानेन जगद्बाध्यत इति कथनं तु भङ्ग्यन्तरेण ब्रह्मज्ञानमेवासम्भवमिति प्रमाणीकरोति, यतः साकल्येन विदितब्रह्मतत्त्व एव ब्रह्मविद्यामुपदेष्टुं शक्नोति, यदि साकल्येन ब्रह्मतत्त्वे विदिते जगदेव बाध्यते चेत् शिष्यदर्शनाभावेन ब्रह्मतत्त्वं कथमुपदेक्ष्यति?। अतो जगज्जीवाविद्यया कल्पितं ब्रह्मज्ञानेन च बाध्यत इत्युक्तिरसङ्गतैवेति निश्चीयते। इत्थं च जगदसत्यताव्याजेन ब्रह्मणः कर्तृत्वादिगुणानां निषेधनमप्यनुचितमेव।

## अविद्या-सहचरं ब्रह्म, सृजति न तु शुद्धम्।

(१६) **पूर्वपक्षी**—**'तत्त्वमसि' 'अयमात्मा ब्रह्म'** इत्याद्याः श्रुतयो जीवो ब्रह्मै-

वेति जीवब्रह्मणोरभेदमुपदिशन्ति, परन्तु जीवो ब्रह्म च यदि वस्तुतो भिन्नौ, तदा तु नायं संभवति, यत एतादृशयोरप्यभेदो भवितुमर्हतीति समर्थनाय न कोऽपि लौकिक-दृष्टान्तः समर्थः। तथाहि—जलांशयोरभेदो भवति, परन्तु जलं सावयवम्। करचरणादीनां शरीरेण सहाभेदो विद्यते, परन्तु करचरणादयोऽवयवाः, शरीरं चावयवि। मृत्तिका—घटस्य मृत्तिकया सहाभेदो विद्यते, परन्तु घटो मृत्तिकाविकारः। एवं सर्वत्र विकारिसावयवपदार्थानामेवाभेदो दृष्टः, ब्रह्मजीवसदृशां निरवयवनिर्विकाराणां न क्वापि दृष्टः। यद्यपि '**ब्रह्म वेद ब्रह्मैव भवती**'ति श्रुतिर्ब्रह्मज्ञानेन जीवस्य ब्रह्मणा सहाभेदः संपद्यत इति वक्ति, परन्तु ब्रह्मजीवयोः सर्वथा भेदे त्विदमप्यसम्भवमेव। यदि ज्ञानेनाप्यभेदः संभवति चेद्, देवदत्तं जानन् विष्णुमित्रोऽपि देवदत्तः किं न भवेत्। अनेनेदं निश्चीयते-यद् ब्रह्म—जीवौ वस्तुतो न भिन्नौ, केवलमुपाधिवशेन भिन्नाविव प्रतीयेते, यदा ब्रह्म—ज्ञानेनोपाधिः प्रणश्यति, तदा भेदप्रतीतिस्तिरोभवति। अतो '**ब्रह्म वेदे**'ति श्रुतिर्यद्ब्रह्मज्ञानेन जीवब्रह्मणोरभेदः संपद्यत इति वक्ति, तदुचितमेव। किञ्चायमुपाधिर्ब्रह्मज्ञानेन प्रणश्यति, अतोऽज्ञानस्वरूपोऽसँश्चायमित्यप्यकामतो मञ्जूरीकर्तव्यमेव। ईदृक् च स्वरूपमविद्याया इति वेदशिरःशायिवचनैर्निश्चीयते। तथा चायमुपाधिरविद्याऽभिधानः, अविद्योपहितं ब्रह्मैव च जीव इति सिद्ध्यति।

किञ्च ब्रह्म निरवयवं निर्विकारं चास्ति, अतो जगदपि ब्रह्मस्वरूपं न भवितुमर्हति, यतो हि जगत् सावयवं सविकारं च।

अपि च—

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति।**
**यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्॥**

इति श्रुतिरविद्यादशायां जगत्प्रतीतिं वर्णयित्वाऽविद्याविनाशोत्तरं मोक्षदशायामात्मभिन्नाभावकथनमुखेन जगदभावं वक्ति। यदि जगद्ब्रह्मस्वरूपं सत्यं च चेत्, मोक्ष—दशायामेतदभावं कथं वदेत्। अतो जगन्मिथ्येति सिद्धान्त—स्वीकृतिरुचितैव।

यद्यप्यस्य मिथ्या जगतः कर्तृ उपादानं च ब्रह्मेति '**यतो वा इमानि भूतानि जायन्ते**' इत्याद्याः कतिपयश्रुतयः कथयन्ति, परन्तु '**निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्**' इत्यादिषु श्रुतिषु निष्क्रियत्वनिरवयवत्वादिनिरूपणेन ब्रह्म नोपादानं कर्तृ चेति प्रमाणीक्रियते, अत उभयासामविरोधायाविद्यासहायं ब्रह्मैव प्रपञ्चरचनाचणमिति निपुणैः स्वीकरणीयमेव।

**शुद्धं ब्रह्मैवास्य जगत उपादानं रचयितृ चेति जगद्ब्रह्मस्वरूपं सत्यं च।**

(१७) **सिद्धान्ती—'तन्त्वौपनिषदं पुरुषं पृच्छामि'** इति श्रुतिर्ब्रह्मस्वरूपपरिचयः केवलमुपनिषद्भिरेव भवतीति वक्ति। उपनिषत्सु च यथा ब्रह्मावयवविरहितमि-

त्युक्तं, तथा जीवो ब्रह्मांशः, जगच्च ब्रह्मण उपादेयकार्यमित्यप्युक्तम्, अत उपनिषन्निदेशादरेणैव यदि स्वीकरणीयं चेद्, उपरि परिदर्शितं सर्वं स्वीकरणीयं, ब्रह्म निरवयवमितीयन्तमेवांशं मञ्जूरीकृत्य शेषस्य निषेधो न कर्तुं शक्यते ।

**'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'**ति श्रुतिस्तु निद्रादशायां दर्शनादिक्रियाणां निषेधं करोति, न तु परममुक्तिदशायाम् । इदं च **'स्वाप्ययसंपत्त्यो'**रिति सूत्रव्याख्याने व्यक्तम् । अत एतया श्रुत्या जगदाविद्यकमसत्यं चेति न प्रमाणीकर्तुं शक्यते ।

**पूर्वपक्षी**—निरवयवस्य निष्क्रियस्य च ब्रह्मणो जीवोंऽशो जगच्चोपादेयकार्यमिति परस्परविरुद्धमुपपत्तिशून्यं च वर्तते, न कोऽपि लौकिकदृष्टान्तोऽस्य समर्थनाय समर्थः, अत इदं न केनापि मतिमता मन्तुं शक्यते ।

( १८ ) **सिद्धान्ती**—यो वैदिकोऽर्थो विरुद्धः सन्दिग्धो वा प्रतिभाति तस्य निर्णयः केनापि लौकिकेन दृष्टान्तेन युक्त्या वा न कर्तुं शक्यते, किन्तु वेदैर्वेदानुसारिभिः शास्त्रवचोभिरेव च कर्तुं शक्यते, यतो हि **'नैषा तर्केण मतिरापनेया' 'अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्'** इत्यादीनि श्रुतिस्मृतिवचनान्यलौकिकवस्तुविचारे तर्का नोपयुज्यन्त इति वदन्ति । यद्यपि निगमागमसंमतास्तर्काः सर्वैराद्रियन्त एवेत्ययं निषेधो लौकिकतर्काणामेवास्ति । उपक्रमोपसंहारप्रभृतिषु तात्पर्यबोधकेषु 'उपपत्ति'—शब्देन वेदादिशास्त्रोदिता युक्तय आद्रियन्त एव । परन्तु वेदेषु वेदानुसारिषु स्मृतिपुराणव्याससूत्रप्रभृतिषु च न काप्येवंविधा युक्तयः समुपन्यस्ता, याभिर्निरवयवस्य निष्क्रियस्य च ब्रह्मणो जीवो नांशो, जगच्च नोपादेयकार्यमिति सिद्ध्येत्, प्रत्युत ब्रह्म—स्वरूपं मीमांसमानो व्यासो जीवोंऽशो, जगच्चोपादेयं ब्रह्मण इत्येव वदति स्म । तथा चैतदीयसूत्रम्—

**'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा'** ।

अर्थः—संपूर्णं ब्रह्म जगद्रूपेण परिणमति, ब्रह्मणः कियानंशो वा ? । संपूर्णं परिणमति चेद् जगद्व्यतिरिक्तं ब्रह्म नास्तीति सिद्धं भविष्यति । कियानंशः परिणमति चेद् ब्रह्म निरवयवमिति वदन्ती **'निष्क्रियं निष्कलं शान्तम्'** इति श्रुतिर्विरोत्स्यते, अतो ब्रह्मणः परिणामो नाङ्गीकरणानुगुणः ।

इमामाशङ्कामुपन्यस्य **'तदात्मानँ स्वयमकुरुते'**ति श्रुतेरर्थं हृदये दधान इदमाहोत्तरम्—

**'श्रुतेस्तु शब्दमूलत्वात्'** ।

अर्थः—ब्रह्म जगद्रूपेण परिणमतीति श्रुतिः कथयति, अतो ब्रह्मणः परिणामोऽकामतोऽपि स्वीकर्तव्य एव, यतो हि ब्रह्म—स्वरूपस्य परिज्ञाने वेदं विहाय नान्यत्साधनमस्तीति यद्वेदो वदति तस्य स्वीकृतिः सर्वस्याप्यास्तिकजनस्यावश्यिकी भवत्येव ।

अनेन निरवयवस्य निष्क्रियस्य च ब्रह्मणो जीवोंऽशो जगच्चोपादेयमिति स्वीकरणं लौकिकतर्कप्रातिकूल्येऽपि नानुचितमिति सिद्ध्यति ।

इदमेव च युक्तम्, यतो हि कियतां लौकिकवस्तूनामपि स्वरूपनिर्णयो न लौकिकतर्कैः कर्तुं शक्यते, तत्कुतः सर्वथा लौकिकेभ्योऽत्यन्तविलक्षणस्य ब्रह्मस्वरूपस्य ।

## अन्तःकरणावच्छिन्नमविद्याऽवच्छिन्नं वा चैतन्यं जीवः ।

**पूर्वपक्षी**—भगवता वेदव्यासेन वेदप्रतिपाद्यस्यार्थस्य सन्दिग्धमंशं स्पष्टीकर्तुं सूत्राणि प्रणीतानि सन्ति, अत एतेषु नैकतममपि सूत्रं निरवयवस्य ब्रह्मणो जीवोंऽश इतीदृशं सन्देहास्पदं वक्तुमर्हति ।

किञ्चैतदपेक्षया तूपाधिसम्बद्धं चैतन्यं जीव इति वदन्त्या ब्रह्मबिन्दुश्रुतेरादरणमेव रमणीयम् । श्रुतिश्चेयम्—

**घटसंवृतमाकाशं लीयमाने घटे यथा ।**
**घटो लीयेत नाकाशं तद्वज्जीवो नभोपमः ॥**

अर्थः—यथा घटे नष्टेऽपि घटपरिच्छिन्नमाकाशं न नश्यति, एवं ( अविद्याऽन्तःकरणान्यतरे ) उपाधौ नष्टे जीवात्मा न नश्यति ।

अत्रानेन घटाकाशदृष्टान्तेनोपाधिपरिच्छिन्नं चैतन्यमेव जीव इति स्पष्टं प्रत्याय्यते ।

## जीवो ब्रह्मणोंऽशः ।

**सिद्धान्ती—'घटसंवृतमाकाश'**मिति श्रुतेरापाततः प्रतीतमर्थं प्रमाणतया पुरस्कृत्याविद्याऽवच्छिन्नमन्तःकरणावच्छिन्नं वा चैतन्यं जीव इति न स्वीकर्तुं शक्यते, यतो हि श्रुतिस्मृतिप्रभृतीनि नानाप्रमाणानि जीवो ब्रह्मणोंऽश इति वदन्ति । तथा च प्रमाणानि—

**यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे जीवाः सर्व एवात्मानो व्युच्चरन्ति रमणीयचरणाः कपूयचरणाः'** इति छान्दोग्योपनिषद् ।

अर्थः—यथाऽग्नेः सकाशात्सर्षपप्रमाणा अग्निकणाः प्रकटीभवन्ति, एवं ब्रह्मणः सकाशात्सर्वे प्राणाः, सर्वे लोकाः, सर्वाण्यन्तःकरणानि, सन्तोऽसन्तश्च जीवाः प्रकटीभवन्ति ।

इयं श्रुतिरग्निकणदृष्टान्तप्रदर्शनेन जीवा ब्रह्मणोंऽशा इति स्पष्टमेव प्रमाणीकरोति, यतो हि वह्निकणवद्ब्रह्मणः सकाशान्निर्गमोंऽशत्व एव संभवति ।

**'ममैवांशो जीवलोके जीवभूतः सनातनः'** इति गीता ।

अर्थः—जीवलोके तिरोहितानन्दमनादि चैतन्यं ममांशः ।

**(१७) 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'** इति व्याससूत्रम् ।

अर्थः—जीवो ब्रह्मणोंऽशः, यतो हि क्वचन जीवो ब्रह्मेत्युक्तम्, क्वचिद् ब्रह्मणः सकाशाज्जीवः प्रादुर्भवतीति, क्वचिद् व्यापक इति, क्वचिदणुरिति च । एवमनेके परस्परविरुद्धा धर्माः श्रुतिशिरःसु प्रतिपादिताः सन्ति । विरुद्धधर्माधिकरणं च ब्रह्मैवेति प्रसिद्धम् । अथ जीवो यदि ब्रह्मांशश्चेत्तदांशांशिनोरभेदाज्जीवोऽपि ब्रह्मैवेत्युपरि परिदर्शिताः परस्परविरुद्धा धर्मा जीवेऽपि संभवन्ति, नान्यथा ।

अत्र गीतावचने सूत्रेऽपि चांशशब्दप्रयोगपूर्वकं सोपपत्ति जीवोंऽश इति निरूप्यते । अतो 'घटसंवृतमाकाशम्' इति श्रुतौ यज्जीवो घटाकाशेनोपमीयते, तस्य केवलं, यथा घटविकारा घटाकाशं न स्पृशन्ति, तथा स्थूलसूक्ष्मशरीरसम्बन्धिनो विकारा जीवात्मानं न स्पृशन्तीत्येव तात्पर्यं मन्तुमुचितं, न तु घटाकाशवदुपाधिपरिच्छिन्नो जीव इति ।

## जीवो न ब्रह्मांशः, किन्तु ब्रह्मांशसदृशः ।

**पूर्वपक्षी—'अंशो नानाव्यपदेशात्'** इत्यतः पूर्वस्मिन्नधिकरणे परमात्मा पूर्वपूर्वधर्माधर्मानुसारेणोत्तरोत्तरं कर्म कारयित्वा तत्फलं सुखं, दुःखं वा जीवेभ्यो ददातीत्युक्तमस्ति । इदं च जीवानां परमात्मना सह कश्चन सम्बन्धः स्यात्तदैव संभवेत्, यतः सर्वथा सम्बन्धविधुरादपि सुखं दुःखं वा लब्धुं शक्यत इति न कोऽपि लौकिक—दृष्टान्तः समर्थयते, अतः सम्बन्धोऽवश्यापेक्षो जातः, अस्या एव च सम्बन्धापेक्षायाः पूर्तये 'अंशो नानाव्यपदेशात्' इति सूत्रं प्रवृत्तमस्ति, अतोऽत्र सूत्रे 'अंश'—शब्देन केवलं सम्बन्धसामान्यस्य बोधनमावश्यकमस्ति, न तु जीवो ब्रह्मावयव इति विशेषस्य बोधनमपि । किञ्चात्र शास्त्रे पारिभाषिकोऽयं शब्दः, अतो लोकदृष्ट्या नार्थोऽस्य वक्तुं शक्यते । इत्थं च प्रकरणपर्यालोचनयेह 'अंश'—शब्दस्य, यथांऽशोंऽशिनो भिन्नोऽभिन्नश्चेति व्यवह्रियते, एवं श्रुतयोऽपि, जीवो ब्रह्मणो भिन्नोऽभिन्नश्चेति वदन्तीत्यतो जीवो ब्रह्मांशसदृश इत्येव तात्पर्यं स्वीकर्तुं शक्यते ।

**'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा'** इति श्रुतौ तु न कोऽप्यंश—वाचकशब्दोऽस्ति, अतो जीवो ब्रह्मांश इति प्रमाणीकरणायास्या उपन्यासस्तु केवलं प्रयासपर्यवसाय्येवेति सिद्ध्यति ।

## जीवो ब्रह्मांशोऽणुश्च ।

**सिद्धान्ती—**'अंश'—शब्दस्य अंश—सदृश इत्यर्थो मुख्यो गौणो वा ? । मुख्यश्चेद्, ईदृगुदाहरणं किमपि प्रदर्श्यताम् । गौणश्चेद्, मुख्यपरित्यागे कारणं किमिति प्रत्युत्तीर्यताम् । किंच **'अंशो नानाव्यपदेशात्'** इति सूत्रानन्तरं **'मन्त्रवर्णात्' 'अपि स्मर्यत'** इति सूत्रद्वयमन्यदपि पठ्यते । एतेन **'पादोऽस्य विश्वाभूतानि' 'ममैवांशो**

**जीवलोके** ' इति श्रुतिस्मृती उदाहृत्य भूयोऽपि जीवोंऽश इति प्रमाणीक्रियते । स्मृतौ च ' **ममैवांश** ' इत्यंश–शब्दः स्पष्टं श्रूयत एव । कथञ्चिदेकत्र 'अंश'–शब्दस्य गौणोऽर्थोऽपि स्यादिति क्षणं विश्वसितुं शक्यते, न सर्वत्र, अत इयतां श्रुतिस्मृतिप्रभृतिप्रमाणवचनानामनुरोधेन जीवो ब्रह्मांश इत्यवश्यं स्वीकरणीयमेव ।

(२४) यद्यपि **'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा'** इति श्रुतावंशवाचकः कोऽपि शब्दो नास्ति, परन्तु वह्निविस्फुलिङ्गदृष्टान्त एवंभूतोऽस्ति, यन्महिम्ना न केवलमंशत्वं, किन्तु जीवे वर्तमाना अस्माकं संमताः सर्वे एव धर्माः सुखेन प्रमाणीकर्तुं शक्यन्ते । तथाहि—यथा विस्फुलिङ्गा वह्नेरंशास्तथा जीवो ब्रह्मांशः । यथा विस्फुलिङ्गानामपेक्षया वह्निर्महान्, एवं जीवापेक्षया ब्रह्म महत् । वह्नेरपेक्षया विस्फुलिङ्गा यथा लघवः, एवं ब्रह्मापेक्षया जीवा लघवः–अर्थात् अणवः । विस्फुलिङ्गानां वह्नितः प्रादुर्भावो यथा विभागमात्रं, न तूत्पत्तिः, एवं जीवानां ब्रह्मतः प्रादुर्भावोऽपि विभागमात्रं, न तूत्पत्तिः । विस्फुलिङ्गा यथा निर्गमनानन्तरं वह्नौ पुनः प्रवेष्टुं योग्याः सन्ति, एवं जीवा अपि प्रादुर्भावानन्तरं ब्रह्मणि पुनः प्रवेष्टुं योग्याः सन्ति । यथा विस्फुलिङ्गाः प्रवेशानन्तरं वह्नितो भिन्ना न प्रतीयन्ते, एवं जीवा अपि मोक्षदशायां ब्रह्मणि प्रविष्टा ब्रह्मतो भिन्ना न प्रतीयन्ते । प्रवेशानन्तरं विस्फुलिङ्गा यथा पुनः प्रादुर्भवितुं योग्याः सन्ति, एवं परममुक्तिदशायां लीना अपि जीवाः पुनः स्वरूपेण प्रादुर्भवितुं योग्याः सन्ति । एते विस्फुलिङ्गदृष्टान्तेन प्रत्यायिताः सर्वे धर्माः श्रुतिस्मृतिव्याससूत्रप्रभृतिभिरनेकैः प्रमाणैः प्रतिपाद्यन्त इति नैषां स्वीकारे काप्यापत्तिरुपस्थिता भवितुं प्रभुः ।

(१८–२३) **पूर्वपक्षी**—अग्निविस्फुलिङ्गदृष्टान्तमहिम्नांऽशत्वप्रभृतीनां सप्तधर्माणां बोधनमनुचितमेव, यतो व्युच्चरणश्रुतौ न केवलं जीवात्मनामेव प्राकट्यमुपवर्ण्यते, किन्तु लोकप्राणान्तःकरणानामपि वर्ण्यते । यद्येतद्दृष्टान्तमहिम्ना जीवोंऽशोऽणुश्चेति सिद्ध्यति चेत्, लोकप्राणान्तःकरणादयः सर्वेऽप्यंशा अणवश्चेति सेत्स्यति ।

किञ्च लोकप्राणान्तःकरणादयोऽनित्या, जीवाश्च नित्याः । अनित्यानामुत्पत्तिः, नित्यानां चाविर्भावः । इत्थं च नित्यैरनित्यैश्चोभयैः सम्बद्ध्यमानाया 'व्युच्चरन्ति' इति क्रियाया उत्पत्तिराविर्भावश्चेत्यर्थद्वयं स्वीकरणीयम् । एकस्या एव क्रियाया अर्थद्वयं च 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायतो विरुद्ध्यते । यदि 'व्युच्चरन्ति' इति क्रियाऽऽवर्त्यते, तथापि क्लिष्टकल्पना त्ववश्यमेषा । अत उपरि परिचायितायां व्युच्चरणश्रुतौ बुद्धिप्राणप्रभृतीनामनित्यमायिकवस्तूनामुत्पत्तिर्वर्ण्यत इत्येव स्वीकरणं रमणीयम् ।

**सिद्धान्ती**—यदि केवलमग्निविस्फुलिङ्गदृष्टान्त एवांशत्वप्रभृति सप्तधर्माञ्जीवे बोधयेत्, तदा त्ववश्यं युष्मत्प्रदर्शिताऽऽपत्तिरपरिहारा स्यात्, परन्तु **'पादोऽस्य विश्वा**

भूतानि' 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्याद्या अनन्तश्रुतयोंऽशत्वप्रभृतीन् धर्मान् बोधयन्ति। अग्निविस्फुलिङ्गदृष्टान्ततः प्रतीतानामंशत्वप्रभृतिधर्माणां च जीवान्तः-करणप्राणादिभिः सह सम्बन्धस्तथा व्यवस्थया स्वीक्रियते, यथैतासां श्रुतीनां विरोधो न भवति। अतो युष्मत्प्रदर्शिताऽऽपत्तिः प्रस्तुतदृष्टान्तस्य बोधकशक्तिं कुण्ठीकर्तुं न क्षमते।

(२४) किञ्च 'व्युच्चरन्ति' इति क्रियाया अपि प्रकटीभवन्तीत्ययमेक एवार्थः स्वीक्रियते, अर्थद्वयस्वीकरणं सर्वथाऽनावश्यकमेव, यतो जडचेतनयोर्वर्तमानाया नित्यत्वविलक्षणतायाः प्रत्यायनायैकमेव प्राकट्यमाविर्भावप्राकट्योत्पत्तिप्रभृतिभिर्नानाशब्दैर्बोध्यते, वस्तुत उत्पत्ति-प्राकट्ययोर्भेदो नास्त्येव। इदमनेन प्राचीनाचार्यवचसा व्यक्तीक्रियते—

**अनित्ये जननं, नित्ये परिच्छिन्ने समागमः।**
**नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा॥**

अर्थः—अनित्यवस्तूनामभिव्यक्तिरुत्पत्तिः, नित्यपरिच्छिन्नवस्तूनामभिव्यक्तिः समागमः, व्यापकपदार्थानामभिव्यक्तिश्च प्राकट्यमित्यभिव्यक्तिस्त्रिविधा।

**पूर्वपक्षी**—जडो जीवश्च द्वयमपि ब्रह्माभिन्नमिति भवद्भिरङ्गीक्रियते, अत एतयोर्नित्य-तायां वैलक्षण्यस्वीकरणे किमपि कारणं नास्ति। किञ्च नित्यताबोधीनि वचनानि जड-जीवौ नित्यावित्येव कथयन्ति, न तु तत्र प्रकारविशेषं वदन्ति। अतो वैलक्षण्यस्वीकरण-मिदं निर्मूलमेवेति नादरभाजनं भवितुमर्हति।

## ब्रह्मधर्माणां तारतम्येन तिरोभावाज्जडजीवान्तर्यामिस्वरूपभेदः।

(१२) **सिद्धान्ती**—ब्रह्मणा क्रीडार्थमेव जगन्निर्माणं कृतमिति **'स वै नैव रेमे ए-काकी न रमते स द्वितीयमैच्छ'**दिति श्रुतिर्वदति। क्रीडा च नानात्वनीचोच्चभावौ विना न सम्भवति, अत एतावपि जगति प्रकटीकृतौ। एतयोः स्वरूपं च **'एकोऽहं बहु स्यां प्रजायेय'** इति श्रुतिः परिचाययति। अत्र श्रुतौ **'एकोऽहं बहु स्याम्'** इतीयानंशो नानात्वं वक्ति। **'प्रजायेय'** इति च प्रकृष्टजननं, यच्च तात्पर्यतो नीचोच्चभावे पर्यवस्यति। अनयोरेव नानात्वनीचोच्चभावयोः प्रकटीकरणाय ब्रह्मणा स्वधर्माणां प्रापञ्चिकपदार्थेषु तारतम्येन तिरोधानं कृतमस्ति। तेषु कतिपये इह सोदाहरणं प्रदर्श्यन्ते।

(२०) ब्रह्मधर्मा यद्यपि बहवस्तथापि सत्, चित्, आनन्द इति त्रयो मुख्याः। एषां स्वरूपपरिचयं च **'सत्यं ज्ञानमनन्तं ब्रह्म'** इति ब्रह्मस्वरूपनिरूपिका श्रुतिर्ददाति। अत्र श्रुतौ 'सत्यं'—पदेन सदंशो, 'ज्ञानं'—पदेन चिदंशः, 'अनन्तं'—पदेन चानन्दांशो बोध्यते। कस्यांचन शाखायां **'सत्यं विज्ञानमानन्दं ब्रह्म'** इत्येवमनन्तपदस्थाने 'आनन्द'—शब्द एव स्पष्टं पठ्यते। तेनाप्ययमेवार्थः स्फुटीभवति। एते च त्रयोऽपि धर्मा न

धर्मरूपेण, किन्तु धर्मिरूपेण प्रतीयन्ते । अत एव 'सत्यं ज्ञानमनन्त'मित्याद्याः श्रुतयोऽप्येवं वर्णयन्ति ।

एषां धर्माणां तिरोभावतारतम्यमहिम्ना जगति जडो जीवोऽन्तर्यामी चेति त्रयो विभागाः सन्ति । यत्र चित्, आनन्दश्चेति द्वयोरपि तिरोभावस्ते जडाः, येषु केवलमानन्दस्यैव तिरोभावस्ते जीवाः, येषु च सत्, चित्, आनन्दश्चेति त्रयोऽपि प्रकटाः, न कस्यापि तिरोभावस्ते अन्तर्यामिणः ।

जडेषु चिदानन्दयोस्तिरोभावेनोत्पत्त्यप्ययोपचयापचयप्रभृतयो विकृतयो लोचनगोचरीभवन्ति, परंतु जीवेषु चितो व्यक्ततया न तथा । केवलमानन्दस्य तिरोधानाद्दुःखमात्रं प्रतीयते । अन्तर्यामिषु च सच्चिदानन्दानां त्रयाणामपि प्रकटतया बाह्य आन्तरश्च न कोऽपि विकारः प्रतीतिपथपथिकीभवति ।

अयं जडजीवान्तर्यामिणां स्वरूपभेदो नानाश्रुतिस्मृतिवचननिचयपरिचायितोऽस्ति । अत एतस्य निर्वाहाय जडजीवान्तर्यामिणां स्वरूपेषु स्वीक्रियमाणं वैलक्षण्यं नाप्रमाणमकारणं वा भवितुमर्हति ।

## जडजीवान्तर्यामिणां स्वरूपभेदोऽनादिः सादिर्वा ? ।

**पूर्वपक्षी**—जडजीवान्तर्यामिणां स्वरूपभेदोऽनादिः, सादिर्वा? । यद्यनादिश्चेद्, ब्रह्मणाऽयमाविष्कृत इति न संभवति, यतोऽनादिर्न केनाप्याविष्कृतो भवति, स हि स्वरूपेण सर्वदाऽवतिष्ठते । यदि सादिश्चेत्, जडजीवयोः प्रकटीकरणावसरे निमित्तभूतानां पूर्वकर्मणामभावेन प्रकटीकरणं न संभवति । यदि निमित्तभूतकर्मणामभावेऽपि लीलोल्लसितलालसेन ब्रह्मणाऽयं स्वरूपभेदो लीलाहेतवे कृतश्चेत्, एतत्कर्तुर्ब्रह्मणो ब्रह्मत्वमेव लुप्तम्, यतो हि शास्त्रेषु ब्रह्म दयोदारमाप्तकामं चेत्युच्यते । दयोदारं च कथमेवं निर्निमित्तमानन्दं तिरोभाव्य जीवान् दुःखिनो विदध्यात् । कथं चाप्तकामं सदपि लीलासुखं लिप्सेत । अतो यथा भवता पूर्वमुपपादितस्तथा तु जडजीवान्तर्यामिस्वरूपभेदः सर्वथा नोपपद्यते ।

(२१) **सिद्धान्ती**—अहो महीयः किल विस्मयास्पदं, यदनन्यसमस्वतन्त्रतापात्रं स्वेच्छाबलेनैव नाना ब्रह्माण्डखण्डानि निर्माति, तत्तु न ब्रह्मेश्वरादिशब्दवाच्यं भवितुमर्हति । यच्च किल जीवकृतकर्मकलापपरतन्त्रं सत्प्रपञ्चं रचयति तद्ब्रह्मेश्वरश्चेति । न हि सर्वविधसामर्थ्यपात्रं विनाऽन्यः कश्चनेश्वर इति वक्तुं शक्यः । यश्चैवंविधः, स कथं जीवकृतकर्मपारतन्त्र्येणात्मानं निगडयिष्यति । अतो दयालुताऽऽप्तकामताभङ्गं हेतूकृत्य सर्वत्रापीश्वरस्य जीवकृतकर्मपारतन्त्र्यस्वीकारः सर्वथाऽनुचित एव ।

किञ्च सर्वेऽपि जडजीवान्तर्यामिणो ब्रह्माभिन्नाः सन्ति । अतो ब्रह्म यदेषु लीलायै

धर्मतिरोभावेन वैचित्र्यं रचयति, तेनाप्तकामताया दयालुतायाश्च भङ्गोऽपि न शङ्कितुं शक्यः, यतो हि आप्तकामता इतरापेक्षायां कृतायां भज्यते, दयालुता च परपीडायाम् । इह च ब्रह्मणोऽन्यः कोऽपि नास्ति ।

किञ्च दयालुताभङ्गादयो दोषाः परतन्त्रमसमर्थं च स्पृशन्ति, न तु समर्थं स्वतन्त्रं च । दृश्यते हि लोके, साधारणपुरुषेण निष्कारणं स्वल्पेऽपि परपीडने कृते, तस्मिन्निर्दय इति निन्दावादः, परन्तु न साधारणापराधेऽपि क्रोधेन सेवकस्य सर्वस्वं हृतवति राजनि । अत एषां दोषाणां भयेन जडजीवान्तर्यामिणां स्वरूपभेदोऽनादिरित्यङ्गीकरणं नावश्यकम् ।

## प्रापञ्चिकपदार्थवैचित्र्ये धर्माधर्मौ हेतुरीश्वरेच्छा वा ।

**पूर्वपक्षी**—प्रापञ्चिकपदार्थेषु वैचित्र्यं स्रष्टुं, जीवेभ्यः सुखदुःखे दातुं चेश्वरो जीवकृतधर्माधर्मौ नापेक्षते इति भवता न वक्तुं शक्यते, यतो भवान् स्वमते व्याससूत्रानुसारेणैव सर्वं निर्णयति, व्याससूत्रं च परमात्मा धर्माधर्मानुसारेणैव जीवेभ्यः सुखदुःखे ददातीति वदति ।

तदिदं व्याससूत्रम्—

**'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः'** ।

अर्थः—सुखकारणं धर्मो दुःखकारणं चाधर्म इति वेदोक्तिर्व्यर्था मा भवत्वित्येतदर्थं परमात्मा जीवेभ्यो धर्माधर्मानुसारेणैव सुखदुःखे ददाति ।

अनेनैव परमात्मा प्रपञ्चं धर्माधर्मानुसारेण रचयतीत्यपि सिद्धम्, यतः सुखदुःखोपभोगसाधनं प्रपञ्च एव ।

किञ्च स्वामी सेवाऽनुरूपं वेतनं सेवकाय प्रयच्छति, परन्तु सोऽसमर्थ इति लोके न केनापि प्रोच्यते, अतः ईश्वरो यज्जीवकर्माण्यपेक्ष्य जीवेभ्यः सुखदुःखे ददाति, तेन नानीश्वरतां यास्यति ।

(२२) **सिद्धान्ती**—भवतोक्तस्य **'कृतप्रयत्नापेक्ष'** इति सूत्रार्थस्य 'धर्माधर्मानुसारेणे'त्येतावानंशः 'कृतप्रयत्नापेक्ष' इति भागस्यार्थो विद्यते । अत्र च भागे धर्माधर्मबोधकः कश्चन शब्द एव नास्ति । श्रूयमाणः 'प्रयत्न'—शब्दश्च शारीरिकव्यापारकारणीभूतो य आत्मधर्मः, यं च कृतिरिति केचन दार्शनिकाः कथयन्ति, स एवार्थः । कदाचन गौणमार्गेण 'प्रयत्न'—शब्दो धर्माधर्मबोधक इति मञ्जूरीक्रियेतापि, परन्त्वेवं सति 'विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इत्यग्रे प्रयुक्तयोः विहितप्रतिषिद्धशब्दयोः स्वारस्यं प्रणश्यति, यतो हि 'विधिनिषेधे'ति लघ्वक्षरशब्दद्वयं परित्यज्य यो विहितनिषिद्धेति दीर्घाक्षरशब्दयोः प्रयोगः कृतः, सोऽयं धर्माधर्मयोर्बोधायैव कृतः । अथ धर्माधर्मयोर्बोधो यदि पूर्वं प्रयुक्तेन 'प्रयत्न'-

शब्देनैव भवितुमर्हति चेत्, इह पुनस्तयोर्बोधनाय 'तदवैयर्थ्यादिभ्यः' इत्येवं तच्छब्द-प्रयोगेनैव लाघवाद्भवितव्यम् । यदि स्पष्टं बोधनाय विशेषवाचकशब्दस्योपन्यासोऽपेक्ष्यते चेत्, तात्पर्ये भेदाभावेन लघ्वक्षरौ 'विधिनिषेध'-शब्दावेव प्रयुञ्जाम् ।

**पूर्वपक्षी**—'प्रयत्न'-शब्दस्यात्मधर्मः कृतिरेवार्थ इति न वक्तुं शक्यते, यतोऽनेकत्रोदाहरणेषु 'प्रयत्न'-शब्दस्य कायिकव्यापारोऽप्यर्थ इति श्रुतम् । अतः प्रसङ्गसङ्गतिमहिम्ना 'प्रयत्न'-शब्दस्य धर्माधर्मावर्थ इति स्वीकरणमपि नारमणीयम् ।

यद्यपि विहितप्रतिषिद्धशब्दयोः स्थाने तच्छब्दप्रयोगेन विधिनिषेधशब्दयोः प्रयोगेन वा वाञ्छितार्थस्य बोधः संपादयितुं शक्यते, परन्तु ऋषिप्रणीतेषु शास्त्रेषु सर्वत्र शब्दलाघवं न विशेषेणाद्रियते । अतो लघ्वक्षरविधिनिषेधशब्दयोः परित्याग एव 'प्रयत्न'-शब्दस्य धर्माधर्मबोधकतां न निषेद्धुं शक्नोति । किञ्च युष्माकं मतेऽपि विहितनिषिद्धशब्दयोर्धर्माधर्मावेवार्थः । अत इयमापत्तिर्युष्माकमपि मते विद्यत एव ।

**सिद्धान्ती**—'कृतप्रयत्नापेक्ष' इति सूत्रे 'प्रयत्न'-शब्देन यौ पुराकृतधर्माधर्मौ भवता बोधयितुमिष्येते, तौ जीवैः स्वतःकृतौ, ईश्वरेण कारितौ वा ? । यदि स्वतःकृतौ, तर्हि अधुनाऽपि स्वतः करिष्यन्ति, पुनरीश्वरः कारयतीति किमर्थं स्वीक्रियते । यदीश्वरेण कारितौ, तर्हि पूर्वपूर्वधर्माधर्मानुसारेणोत्तरोत्तरं जगदीश्वरो धर्माधर्मौ कारयतीति भवतामङ्गीकृतिर्न सङ्गच्छते, यत इयं, जन्मान्तरीयपुण्यकर्मणां संस्कारोदयेन यदा जीवः पुण्यं कर्म कर्तुं काङ्क्षति, तदा जगदीश्वरस्तथाविधं कर्म कारयति । यदा च जन्मान्तरीयपापकर्मणां संस्कारोदयेन पापकर्म कर्तुमभिप्रैति, तदा जगदीश्वरस्तथाविधं कर्म कारयतीत्यर्थे पर्यवस्यति । एवं स्वीकृते येषां संस्काराणां प्रभावेन जीवाः सदसद्वा कर्म कर्तुमिच्छन्ति, त एव संस्कारास्तथाविधे कर्मणि जीवं प्रवर्तयिष्यन्त्यपीति सिद्धया प्रवर्तकस्येश्वरस्य वैदिकविधिनिषेधानां चावश्यकतैव प्रणश्यति । एवं भवदभिप्रायस्वीकारेणेश्वरवैदिककर्मकाण्डधर्मशास्त्रप्रभृतयो भूयांसो मर्यादानिर्वाहका व्यर्थीभवन्तीति न स्वीकर्तुं शक्यते ।

**पूर्वपक्षी**—यागहोमादिकर्माणि जडतया जीवेभ्यः स्वतःफलं समर्पयितुं न प्रभवन्ति । अतः फलसमर्पक ईश्वरोऽवश्यं स्वीकरणीय एव । किञ्च जन्मान्तरीयकर्मानुसारेण सदसत्कर्मसु प्रवृत्तिर्भवतीति स्वीकारेऽपि वैदिकविधिनिषेधानां धर्मशास्त्राणां च वैयर्थ्यं न भवितुमर्हति, यतः पूर्वकर्मवासनया प्रवृत्तौ सत्यामपि करिष्यमाणकर्मणां स्वरूपस्य फलस्य च परिचयाय वैदिकविधिनिषेधादयोऽपेक्ष्यन्ते ।

**सिद्धान्ती**—यागहोमादिवेदोक्तकर्मणां स्वरूपं कीदृशम् ?, एभिश्च यथोक्तफललाभो भवितुमर्हति न वेत्यादिनिश्चयः केवलं वेदेनैव भवितुमर्हति, नान्येन । अतो वेदो यदि

यागहोमादिकर्मभिः स्वर्गो लब्धुं शक्यत इति वदति चेत्, एतदनुरोधेन यागादिकर्मणां स्वरूपमेव तथाविधमङ्गीक्रियताम्, येनेश्वरस्यापेक्षैव न भवेत्।

किञ्च वैदिकविधिनिषेधानां धर्माधर्मयोः स्वरूपज्ञापन उपयोग इत्यपि वक्तुं न शक्यते, यतो भवन्तो, नेश्वरः साक्षात् कञ्चन प्रवर्तयति निवर्तयति वा, किन्तु वैदिकविधिनिषेधानां द्वारैव तथा करोतीति स्वीकुर्वन्ति। यदि प्रस्तुतपक्षसमर्थनायेश्वरः स्वेच्छयैव प्रवर्तयति निवर्तयति च, न वैदिकविधिनिषेधानां द्वारेत्युच्यते चेत्, जन्मान्तरीयकर्मसंस्काराणां सहायता व्यर्थीभवति, यत एतां विनापीश्वरः स्वेच्छया प्रवृत्तिनिवृत्ती संपादयितुं शक्नोति।

**पूर्वपक्षी**—जन्मान्तरीयकर्मसंस्काराणां सहायतां विनैव यदीश्वरः स्वेच्छया शुभाशुभकर्मसु जीवानां प्रवृत्तिं संपाद्य कर्मानुरूपं फलं दास्यति, तर्हि विषमो निर्घृणश्च प्रमाणीभविष्यति। अत उक्तसंस्काराणां सहायतास्वीकारः सर्वथाऽऽवश्यक एव।

**सिद्धान्ती**—जन्मान्तरीयकर्मसंस्कारानुसारेण शुभाशुभकर्मसु जीवा यदि स्वयं प्रवर्त्तेरन्, ततश्चेश्वरस्तेभ्यः कर्मानुरूपं फलं दद्यात्, तदा त्वीश्वरे वैषम्यनैर्घृण्यदोषयोः स्पर्शो न संस्रष्टुं प्रभुर्भवेत्, परन्तु पूर्वकर्मवासनासाहाय्ये सत्यपि यदीश्वरः स्वयं शुभाशुभकर्माणि कारयति तदनुरूपं च फलं ददाति चेत्, अवश्यं वैषम्यनैर्घृण्यदोषयोः स्पर्शो भविष्यत्येव।

किञ्च जीवा हि विवेकविकलाः सन्ति, न स्वीये हिताहिते विचारयितुं क्षमन्ते। कदाचन कृतेऽपि समुचितविचारे न तदनुसारेण हितावाप्तये चेष्टितुं पर्याप्नुवन्ति। यदीदृशदीनदशाञ् जीवानीश्वरः सर्वज्ञः सर्वसमर्थोऽपि सन् सत्कर्मसु प्रवर्त्य सुखं न ददाति चेत्, अवश्यं विषमो निर्घृणश्चेति निखिलैर्निष्पक्षपातं वक्ष्यते, जन्मान्तरीयकर्मसंस्काराणां सहायता नेश्वरमाभ्यां वैषम्यनैर्घृण्यदोषाभ्यां मोक्तुं शक्नोति।

**पूर्वपक्षी**—भवतां मते त्वितोऽपि महत्यापत्तिर्वर्तते, यतः **'एष उ एव साधु कर्म कारयति' 'एष उ एवासाधु कर्म कारयति'** इति श्रुतिद्वयं दर्शयित्वा प्रवर्तने निवर्तने च केवलमीश्वरेच्छैव कारणमिति भवन्तो वदन्ति। एवं स्वीकारे च वैषम्यनैर्घृण्यदोषौ त्वापतत एव, परन्तु सहैव वैदिकविधिनिषेधा अपि व्यर्थीभवन्ति, यतः पुण्यकर्मसु प्रवृत्तिः, पापकर्मभ्यश्च निवृत्तिरेतयोर्बलेन भवति स्म, सा संप्रति परमात्मेच्छयैव संपाद्यते।

**सिद्धान्ती**—अस्य प्रपञ्चस्य रचना परमात्मना क्रीडार्थं कृताऽस्ति। क्रीडा च नियमापरपर्याया मर्यादाया विना न भवितुमर्हति, अतः सृष्टेः प्रारम्भ एव 'अयं जीवोऽस्मिन् देशे काले चैभिः साधनैः सुखं दुःखं वा लभता'मित्येवं प्रतिजीवं नियमान् निर्मितवान् परमात्मा। एषामेव च परिचयाय वेदमाविश्चकार। यानि सुखसाधनानि तानि वेदे कर्त-

व्यतया निर्दिश्यन्ते, यानि च दुःखसाधनानि तानि निषिध्यन्ते । इदं सुखदुःखसाधनज्ञापनमेव वैदिकविधिनिषेधानां फलम् । अयं सर्वोऽप्यर्थः 'कृतप्रयत्नापेक्ष' इति सूत्रेण व्यक्तीक्रियते ।

अयं हि सूत्रार्थः—**कृतः** सृष्ट्यर्थं कृतो यः **प्रयत्नः** 'अयं जीवोऽस्मिन् देशे' इत्येवंरूपाणां पूर्वोक्तनियमानां निर्माणप्रयत्नः **अपेक्षः** तमपेक्षमाण एव तु सुखदुःखसाधनानि कारयति, सुखदुःखे च प्रयच्छतीति शेषः । तत्र हेतुः—**विहितप्रतिषिद्धावैयर्थ्यादिभ्यः** वेदे ये विहिता, ये च निषिद्धास्ते मा व्यर्था भवन्त्वित्येतदर्थम् ।

यद्यपि सुखदुःखसाधनेषु ब्रह्मैव प्रवर्तयति निवर्तयति च, तदनुरूपं फलमपि च ब्रह्मैव ददाति, परंतु जीवा ब्रह्मांशत्वाद् ब्रह्मणोऽभिन्नाः सन्ति, वैषम्यनैर्घृण्यदोषौ च भेदप्रतिवेशिनौ, नाभेदेऽवस्थातुमर्हत इति सविस्तरं पूर्वमुक्तम् ।

## जीवो यदि ब्रह्मांशस्तर्हि सर्वज्ञः कुतो न ? ।

( १९–२० ) **पूर्वपक्षी**—जीवो ब्रह्मांश इति तु न संभवति यतो हि जीवोऽल्पज्ञोऽज्ञो भ्रान्तश्च, ब्रह्म तु सर्वज्ञम् । किञ्च यथा विस्फुलिङ्गोऽल्पप्रकाशस्तथा जीवोऽल्पज्ञ इति तु वक्तुं क्षममपि, परन्तु ज्ञानविरोधिनोरज्ञानभ्रमयोरवस्थानासम्भवेन ज्ञानात्मा जीवो भ्रान्तोऽज्ञश्चेति तु सर्वथाऽसम्भवमेव । न हि विस्फुलिङ्गे कदाचिदपि प्रकाशविरोधिनोऽन्धकारादयो धर्मा अवस्थितिं लभन्ते ।

किञ्च जीवो ब्रह्मांशश्चेद् ब्रह्मवत्समर्थोऽपि कथं न ? । या हि दाहकशक्तिरग्नौ, सा तदीये विस्फुलिङ्गेऽपि विद्यते । किञ्च शरीरैः सह सम्बन्धात्सामर्थ्यं प्रणष्टमित्यपि न वक्तुं शक्यम्, यतस्तथाविधेऽप्रतिहतसामर्थ्ये वर्तमाने सति नानादोषपरिपूर्णैः प्राकृतशरीरैः सह सम्बन्ध एव न संभवति, सम्बन्धात्पूर्वं च कारणाभावेन सामर्थ्यप्रणाशो न भवितुमर्हति ।

**'यथाऽग्नेः क्षुद्राः'** इति श्रुतिस्तु जीवोंऽश इति न वक्ति, किन्तु ब्रह्मणि वर्तमानानां जीवानां सर्गारम्भे केवलं ब्रह्मणः सकाशाद्बहिर्निर्गमनमेव वक्ति । एवं, ब्रह्मभिन्नः कश्चन द्रष्टा नास्तीति वदन्त्या **'नान्योऽतोऽस्ति द्रष्टा'** इति श्रुतेरप्यंशांशिभावेन जीवब्रह्मणोरभेदोऽत्यन्ताभेदो वेति न फलिताशयः, किन्तु भ्रमसंशयादिदोषस्पर्शशून्यं यादृशं द्रष्टृ ब्रह्म तादृशो नान्य इत्येवाशयः । यथा **'पार्थ एव धनुर्धर'** इत्यस्य पार्थप्रतिमोऽन्यो धनुर्धरो नास्तीत्याशयः ।

किञ्च स्पष्टं पादांशादिशब्दैर्जीवं बोधयन्तीनां **'पादोऽस्य विश्वा भूतानि'** **'ममैवांशो जीवलोके'** इत्यादिश्रुतिस्मृतीनामपि यथाऽग्नेर्विस्फुलिङ्गोंऽशस्तथा जीवो ब्रह्मणोंऽश इति नाभिप्रायः, किन्तु जीवश्चैतन्यगुणेन ब्रह्मसदृशोऽणुपरिमाणतया ब्रह्मणोऽपकृष्टश्चेत्येवा-

भिप्रायः। यथा चन्द्रमण्डलाच्छतांशो गुरुमण्डल इति वाक्ये। अतो जीवो ब्रह्म—स्वरूपो ब्रह्मांशो वेति न वक्तुं शक्यते, जीवो ब्रह्मणः सर्वथा भिन्न एव।

### ईश्वरेच्छया धर्मस्वरूपं ज्ञानं तिरोहितमस्तीत्यतो जीवोऽज्ञः।

सिद्धान्ती—यथा तेजः सूर्यस्य स्वरूपं धर्मश्च, एवं ज्ञानमपि ब्रह्मणः स्वरूपं धर्मश्च। तत्र **'सत्यं ज्ञानमनन्तं ब्रह्मे'**ति श्रुतौ ब्रह्मणः स्वरूपात्मकं ज्ञानं निरूप्यते, **'स्वाभाविकी ज्ञानबलक्रिया चे'** त्यत्र धर्मात्मकम्। भगवानिति शब्दोऽपि भगं ज्ञानं विद्यतेऽस्मिन्निति व्युत्पत्त्या ब्रह्मणि धर्मात्मकं ज्ञानमप्यस्तीति प्रमाणीकरोति। यद्यपि ब्रह्मणो धर्मा ब्रह्मस्वरूपा एव सन्ति, **'एकमेवाद्वितीय'** मित्याद्यद्वैतश्रुत्यनुरोधेन ब्रह्मणोऽतिरिक्तमपि किंचिदस्तीति वक्तुमशक्यत्वात्; तथाऽपि तेजोवद्धर्मत्वेन धर्मित्वेन चोभयथाऽपि धर्माणां प्रतीतिर्भवतीति श्रुतयोऽप्येवमेव वर्णयन्ति। अतः श्रुत्यनुसारिभिरस्माभिरपि तथैव स्वीकर्तव्यम्। श्रौतेऽर्थे श्रुतेरेव शरणीकरणीयत्वात्।

अस्यैव धर्मरूपस्य ज्ञानस्य, ब्रह्मणा क्रीडायामपेक्षितस्य भेदस्य सिद्धये जीवे तिरोभावः कृतो वर्त्तते। अत एव भ्रमसन्देहादिमिथ्याज्ञानानि जीवे प्रतीयन्ते।

### ईश्वरेच्छयैव जीवेष्वैश्वर्यादयोऽन्येऽपि धर्मास्तिरोहिताः सन्ति।

भगवानिति शब्देन ब्रह्मण्यैश्वर्यं, वीर्यं, यशः, श्रीर्वैराग्यं चेति पञ्च धर्मा ज्ञानभिन्ना अन्येऽपि बोध्यन्ते। ज्ञानवदेतेऽपि धर्मा जीवेषु तिरोहिताः सन्ति। ऐश्वर्यतिरोभावेनैव जीवेषु दैन्यं पारतन्त्र्यं सामर्थ्यविरहश्च प्रतीयते। वीर्यतिरोभावेनैव सर्वाणि दुःखानि सहन्ते। यशस्तिरोभावेनैव नितान्तं हीनो वर्तते। श्रीतिरोभावेन जन्ममरणाद्यनेकापत्तीरनुभवति। अयं धर्मतिरोभावो भगवता वेदव्यासेन **'पराभिध्यानात्तु तिरोहित'**मिति सूत्रेण वर्णितः। अस्यैव धर्मतिरोभावस्य प्रभावेन च जीवब्रह्मणोरत्यन्तवैलक्षण्यं प्रतिभासते, वस्तुतो जीवो ब्रह्मांशत्वाद् ब्रह्मैव।

### जीवा ब्रह्मणो निजांशाः।

(२३) किञ्च **'पादोऽस्य विश्वा भूतानि' 'ममैवांशो जीवलोके'** इत्यादिश्रुतिस्मृतिवचनेषु पादांशादिशब्दानां, यथा चन्द्रमण्डलाच्छतांशो गुरुमण्डल इत्यादिवाक्येष्वंशशब्दस्य गौणोऽर्थः स्वीक्रियते, तथा गौणोऽर्थो न स्वीकर्तुं शक्यते, नापि च, यथा करचरणादयः पुरुषस्य निजांशाः पुत्राश्च विभिन्नांशास्तथा मत्स्यप्रभृतयोऽवतारा निजांशा जीवाश्च विभिन्नांशा इति वक्तुं शक्यते, यतो हि भगवतो वेदव्यासस्याभिप्रायादिदं विरुध्यते। तथा च तदीयं सूत्रम्—

**'प्रकाशादिवन्नैवं परः।'**

भावार्थः—यथा सूर्यस्य वह्नेश्च तेजसाऽन्ये परितप्यन्ते, परन्तु न स्वीयतेजसा तौ

स्वयम्, यतस्तत्तेजो न तयोः स्वरूपतो विभिन्नमस्ति, एवं ब्रह्मापि जीवानां सुखदुःखाभ्यां न स्पृश्यते, यतो ब्रह्मणो भिन्नं न किमप्यस्ति, नापि ब्रह्मणः क्वापि भ्रममूला भेदबुद्धिरस्ति। जीवानामविद्यावशेन सर्वत्र भेदः प्रतिभाति, अत एते एव नानाविधैः सुखदुःखैः क्लिश्यन्ते।

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्।

भावार्थः—यथा चाण्डालकलशेन जलस्य, स्मशानेन वह्नेश्च योंऽशः सम्बद्ध्यते स एव जनैरपवित्र इति मत्वा परिह्रियते, न तु जगति वर्तमानाः सर्वेऽपि जलवह्नयः, एवं शरीरेष्वध्यासात्मकं सम्बन्धं कल्पितवतां जीवानामेव शरीरदोषैः सम्बन्धो भवति न ब्रह्मणः। अतः शुद्ध्यशुद्धी ग्राह्यताऽग्राह्यता चेति विचार एष्वेवावकाशं लभते, न तु ब्रह्मणि।

अनेन सूत्रद्वयेन जीवगतानां सुखदुःखानां गुणदोषाणां च ब्रह्मणि स्पर्शो न भवतीति यः परिहारः कृतः, सोऽयं जीवो ब्रह्मणो निजांशश्चेत्तदैव संभवति, यतो हि नात्यन्तमसम्बद्धस्य भिन्नस्य गुणदोषैः कश्चन सम्बद्ध्यते। न हि देवदत्तस्य शरीरे केनाप्याघाते यज्ञदत्तस्य शरीरे वेदना समुत्पद्यते। अतश्चन्द्रमण्डलगुरुमण्डलवत् पितृपुत्रवद्वा न जीवब्रह्मणोः कथमपि भेदः स्वीकर्तुं शक्यते।

(१८) **पूर्वपक्षी**—अन्तर्यामिब्राह्मणे जीवा हि ब्रह्मणः शरीरमित्युक्तम्। शरीरशरीरिणोश्च भेदो लोके प्रत्यक्षीक्रियते। अतो ब्रह्मणो भिन्नो जीव इत्येव मन्तुमुचितम्। याश्च श्रुतयो जीवो ब्रह्मणोंऽश इति वदन्ति, तासामपि तात्पर्यं यथा पुरुषस्य करचरणादयोऽवयवा अंशास्तथा ब्रह्मशरीरं जीवोऽपि ब्रह्मांश इत्यस्ति। अतो ब्रह्मणो भिन्नो जीव इति स्वीकारो न केनापि विरुध्यते।

**सिद्धान्ती**—यथाऽन्तर्यामि-ब्राह्मणे जीवा ब्रह्मणः शरीरमित्युक्तम्, तथैव पृथिवीप्रभृतयो जड-पदार्था अपि ब्रह्मणः शरीरमित्युक्तम्। अतः केवलं शरीरत्वं लक्ष्यीकृत्यैव जीवा ब्रह्मांशा इत्युच्यते चेद् जडा अप्यंशा इति कथं नोच्यते। किञ्च **'एकोऽहं बहु स्याम्'** इति श्रुतौ ब्रह्म **'एक'**-पदेन सृष्टेः प्रारम्भात्पूर्वं स्वभिन्नस्य सत्तां निषेधति। अतो जीवजडाभिधं ब्रह्मशरीरं ब्रह्मणः सर्वथा भिन्नं सर्वदा वर्तमानं च चेद्, इयं श्रुतिर्विरुध्यते। यद्यपि जनान्तरसन्निधानाभावे सर्वेऽपि पुमांसः इहाहमेकोऽस्मीति मन्यन्ते, परन्त्वेवंविधं मननं मनुष्येष्वेव संभवति, न ब्रह्मणि, यतो हि मनुष्या अज्ञानवशेन स्वशरीरमात्माऽभिन्नं मन्यन्ते, ब्रह्म त्वज्ञानभ्रमप्रमादादिभिरत्यन्तमस्पृष्टं, न भिन्नं जडजीवाभिधं स्वशरीरमभिन्नमिति मन्तुमर्हति। किञ्च **'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयं ब्रह्म'** इत्याद्या अन्या अप्यनेकश्रुतयो ब्रह्म-भिन्नं वस्तु निषेधन्ति। अतो ब्रह्मभिन्नो जीव इति न कस्यापि श्रद्धेयं भवितुमर्हति।

## जीवो नाणुः ।

( २६ ) **पूर्वपक्षी**—यदि जीवो ब्रह्माभिन्नश्चेद्, ब्रह्मवद्व्यापकोऽपि स्याद् , यतो नाणुव्यापकयोरभेदो भवितुमर्हति । किञ्च **'स वा एष महानज आत्मा' 'आकाशवत्सर्वगतश्च नित्यः' 'नित्यः सर्वगतः स्थाणुः'** इत्याद्या अन्या अपि नानाश्रुतयः स्मृतयश्च जीवो व्यापक इति कथयन्ति ।

किञ्च यौक्तिकविचारेणापीदमेव समुचितं प्रतिभाति, यतो हि सर्वस्मिञ्छरीरे व्याप्तं यच्चैतन्यं तज्जीवस्य गुणः, गुणश्च स्वगुणिनो नाधिकप्रदेशेऽवस्थातुमर्हति । जीवो यद्यणुः स्यात्तदीयगुणश्चैतन्यं सर्वमपि शरीरं न व्याप्नुयात् , शरीरस्य तावत्येव प्रदेशेऽवतिष्ठेत यावति जीवो वसति ।

किञ्च लोके कश्चनैवंविधो दृष्टान्तोऽपि नास्ति, यत्र धर्मिणोऽधिकप्रदेशे धर्मस्य (गुणस्य) अवस्थितिरस्तीति प्रत्यक्षीक्रियेत। यो हि पुष्पप्रभृतीनां गन्धो बहुदूरादाघ्रायते, सोऽपि वायूपनीतपुष्पपरोक्षपरमाणुसमाश्रय एवास्ति । या चैकदेशे लग्नस्य चन्दनबिन्दोः शीतलता सर्वत्रापि शरीरेऽनुभूयते, साऽपि चन्दनबिन्दुसूक्ष्मकणप्रसरणलब्धजन्माऽस्ति, अतः सूक्ष्मचन्दनकणाश्रयैव ।

मणिप्रभाया यद्यपि मणिप्रदेशाधिकप्रदेशे स्पष्टमेवावस्थितिः प्रतीयते । मणेरवयवाश्च घनसंसृष्टा इति पवनप्रभावेनैषां दूरगमनमपि न संभवति, परन्तु प्रभा मणेरुत्पन्नं विरलावयवं द्रव्यान्तरमस्ति, न तु गुणः । इत्थं च दृष्टान्ताभावेनात्मप्रदेशाधिकप्रदेशे आत्मगुणश्चैतन्यमवस्थातुमर्हतीति न केनापि स्वीकर्तुं शक्यते ।

यद्यपि जीवः शरीरपरिमाण इति स्वीकारे चैतन्यस्य शरीरव्यापिनी स्थितिः समर्थयितुं शक्यते, परन्तु शरीरपरिमाणो जीवो मध्यमपरिमाण एव स्यात् , मध्यमपरिमाणश्च दृष्टान्ताभावेन न नित्यो भवितुमर्हतीति नित्यत्वप्रतिपादकशास्त्रं विरुध्यते ।

इदं हि सर्वस्यापि तात्पर्यम्—जीवोऽणुश्चेत् चैतन्यस्य शरीरव्याप्तिर्न संभवति, मध्यमपरिमाणश्चेत्, नित्यत्वं न संभवति, अतो जीवो व्यापक एवेति स्वीकर्तव्यम् ।

किञ्च याः श्रुतयो जीवोऽणुरिति वदन्ति, तासामपि तात्पर्यं जीवो दुर्बोध इति प्रमाणीकरणमेव । अतो न कश्चिद्विरोधोऽपि ।

## जीवोऽणुरस्ति ।

( २७ ) **सिद्धान्ती**—जीवो न व्यापकः, किन्त्वणुरेवास्ति । यतो व्यापकात्मवादिन्यः श्रुतयो ब्रह्मनिरूपणप्रसङ्गसङ्गिन्यः सन्ति । अत एताभिर्ब्रह्म व्यापकमित्येव सिद्ध्यति, न तु जीवो व्यापक इति । याश्च श्रुतिस्मृतयो जीवोऽणुरिति कथयन्ति, तासामप्यभिप्रायो जीवः

परमाणुवद्बोध इति प्रमाणीकरणं नास्ति, किन्तु वस्तुतो जीवस्याणुत्वबोधनमेव, यतो हि आसामर्थनिर्णयाय प्रवृत्तं व्याससूत्रमपि जीवोऽणुरिति भणति । इदं हि व्याससूत्रम्—

**'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्'**

अर्थः—जीवोऽणुर्वर्तते, यतो हि व्यापकात्मवादिन्यः श्रुतयो ब्रह्मनिरूपणप्रकरणे पठिताः सन्ति ।

यावति प्रदेशे जीवस्य स्थितिरस्ति ततोऽधिकप्रदेशेऽपि तद्गुणश्चैतन्यमवस्थातुमर्हतीति दृष्टान्तप्रदर्शनमुखेनेमानि सूत्राणि प्रमाणीकुर्वन्ति—

**'व्यतिरेको गन्धवच्च'**

अर्थः—यथा गन्धः स्वधर्मिसंस्पृष्टप्रदेशादधिके प्रदेशेऽप्यवतिष्ठते, एवं हृदयस्थजीवस्य धर्मश्चैतन्यमपि सर्वं शरीरं व्याप्तुं पर्याप्तमस्ति ।

**'अविरोधश्चन्दनवत्'**

अर्थः—यथा शरीरैकदेशे स्थितस्यापि चन्दनबिन्दोः शीतलता सर्वत्र शरीरे प्रसरति, एवमेकदेशस्थितस्याप्यणोर्जीवस्य चैतन्यं सकलेऽपि शरीरे सञ्चरति ।

**'गुणाद्वालोकवत्'**

अर्थः—यथैकदेशस्थितस्यापि दीपस्य प्रकाशः सर्वं मन्दिरं समुज्ज्वलयति, एवं हृदयदेशे स्थितस्याणुजीवस्यापि चैतन्यं सर्वं शरीरं चेतयते ।

यच्चैतानि पूर्वपक्षसूत्राणीत्युक्त्वा पुष्पाणां गन्धः, चन्दनबिन्दोः शीतलता, दीपस्य च प्रकाशो यत्सुदूरे प्रदेशे वर्तमानोऽनुभूयते, तस्य कारणं पुष्पचन्दनादिसूक्ष्मावयवानां तावत्पर्यन्तं प्रसरणमेव, न तु द्रव्यं विहाय गन्धादिगुणास्तावत्पर्यन्तं गन्तुमर्हन्तीति यौक्तिकविचारेण खण्डनं कृतम्, तदपि विवेकविरहविलसितमेव, यतो हि मन्थरशीतवाते प्रभाते बहुदूरादेव देहिभिरचिरविकचकुन्दादिकुसमगन्धः शिङ्घ्यते । इयद्दूरप्रदेशव्यापनाय च भूयांसोऽवयवा अपेक्ष्यन्ते । इयन्तोऽवयवा यदि वायुवेगेन पुष्पेभ्यः पृथग्भवन्ति चेत्, पुष्पाण्येव नङ्क्ष्यन्ति, सरन्ध्राणि वा भविष्यन्ति । गन्धं शिङ्घमाणानां पुण्यप्रभावेन वायुवेगनिर्गतावयवानां स्थाने तत्क्षणमेव नव्यावयवा आविर्भवन्तीति तु न वक्तुं शक्यते, यतः अवयवपूरकपुण्यविशेषस्य सत्ता पुष्पाविनाशदर्शनतो लब्धजन्मनाऽनुमानेन निश्चीयते, सुदूरप्रदेशे गन्धस्य स्थितिस्तु प्रत्यक्षेण । अत एतादृशपुण्यविशेषकल्पनापेक्षया तु द्रव्याधिकदेशे गन्धस्थितेः स्वीकृतिरेव सरला सरणिः । किञ्च प्रवातप्रदेशवर्तिनां पुष्पादीनामवयवाः कदाचन कथञ्चन पवनप्रभावेन पृथग्भवेयुरपि, परन्तु वणिजां विपणिगर्भगृहेषु वर्तमानानां चर्मपुटवेष्टितमृगमदानामवयवा वायुसंसर्गाभावेन पृथग्भवितुं न प्रभवः,

गन्धस्तु तत्रापि प्रत्यासन्नैः शिङ्घ्यत एव । एवं लशुनस्पर्शलग्नगन्धस्य पाणेर्मृत्स्नामर्दनपूर्वकं पर्याप्तपानीयेन पुनः पुनः प्रक्षालनेऽपि नापैति दुर्गन्धः । यदि स्पर्शमात्रेण पाणौ लग्ना लशुनावयवाः एव गन्धमुद्गिरन्ति चेत्, कथं पुनः पुनः प्रक्षालनेनापि न दूरीभवति गन्धः । नह्येवं प्रक्षालने स्पर्शमात्रेण लग्ना गन्धाधारा अवयवा अवस्थातुं शक्नुवन्ति । अतो लशुनावयवानामभावेऽपि पाणौ गन्धस्तिष्ठतीत्यवश्यं स्वीकर्तव्यम् । तथा च सिद्धं गन्धस्य द्रव्याधिकदेशे वर्तमानत्वम् । एतत्समानन्यायेनैव च शीतस्पर्शप्रकाशप्रभृतीनामन्येषां गुणानामपि ।

इत्थं च **'व्यतिरेको गन्धवच्च' 'गुणाद्वाऽऽलोकवत्'** इत्यादिसूत्राणि न पूर्वपक्षोपस्थापकानि, किन्तु सिद्धान्तप्रदर्शकानि । अत एतद्दर्शितदृष्टान्तानुसारेणाणोरपि जीवस्य गुणश्चैतन्यं सर्वं शरीरं व्याप्तुमर्हतीति सिद्धम् ।

किञ्च द्रव्याधिकदेशे तदीयगुणस्य स्थितिः केवलमस्माभिरेवाङ्गीक्रियत इति न, किन्तु नैयायिकैरप्यङ्गीक्रियते । ते हि समवायसम्बन्धनामानमेकं नित्यधर्मं तदाधारभूतयोर्जातिव्यक्त्योरभावेऽपि कालेऽन्यत्र वा यत्र कुत्रचन स्थितिं स्वीकुर्वत एव । किञ्च गुणनाशस्य द्रव्यनाशः कारणम्, कारणेन च कार्यपूर्वक्षणवर्तिनाऽवश्यं भवितव्यमेव । अतः पूर्वक्षणे द्रव्यनाशस्तदुत्तरक्षणे च गुणनाश इतीयमपि एकक्षणपर्यन्तं निराधारा स्थितिर्नैयायिकैः स्वीक्रियत एव । अत एतद्वद् अस्माभिरप्यणोर्जीवस्य चैतन्यं सर्वं शरीरं व्याप्नोतीति स्वीकारे न काऽप्यनुपपत्तिः ।

( २८ ) **पूर्वपक्षी**—यथा वह्निस्तदुष्णता च न भिन्नौ, एवं जीवस्तच्चैतन्यं च न भिन्ने । अतो जीवः केवलं हृदये वसति, तद्गुणश्चैतन्यं च सर्वत्र शरीर इति न केनापि वक्तुं शक्यते । किञ्च जीवो हृदये वसतीत्यत्र किंचन प्रमाणमपि नास्ति । अतो जीवो व्यापक इत्येव स्वीकर्तव्यम् ।

**सिद्धान्ती**—वह्निस्तदुष्णता च न सर्वथाऽभिन्नौ । यद्यभिन्नौ चेद् मणिमन्त्रादिप्रभावेनोष्णतायां नष्टायां वह्निरपि प्रणश्येत् । यदि कियानस्ति चेद्भेदः, यथैतयोस्तथैव जीवचैतन्ययोरपि । अयं भेदः **'प्रज्ञया शरीरं समारुह्य'** इति श्रुतेरर्थं कथयता भगवता वेदव्यासेन **'पृथगुपदेशात्'** इति सूत्रेणोक्तः ।

किञ्च **'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि'** इति सूत्रेण जीवो हृदये वसतीत्यपि कथितम् । **'हृदि ह्येष आत्मा' 'स वा एष आत्मा हृदि'** इत्याद्या अन्या अपि नानाश्रुतयो जीवस्य हृदये स्थितिरस्तीति वदन्ति ।

( २५-२८-२९ ) किञ्च चन्द्रलोकस्वर्गलोकादिप्रदेशेषु जीवानां गमनं कथयन्त्यः श्रुतयोऽपि तदैव सार्थकीभवन्ति, यदा जीवोऽणुः स्यात्, यतो हि आकाशवद्व्यापकस्य न

चन्द्रलोकादिषु गमनं संभवति, किन्त्वणोरेव संभवति । किञ्च **'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'**ति श्रुतिश्च यज्जीवस्य तदुपाधिभूतस्य प्राणस्य च पृथक् २ शरीराद्बहिर्निर्गमनं वदति, इदमपि जीवो व्यापकश्चेद्, न संभवति । कदाचन कलशक्रिया यथा तत्परिच्छिन्ने गगने आरोप्यते, एवं प्राणाद्युपाधिक्रिया जीवे आरोप्य श्रुतिर्जीवस्य निर्गमनं वक्तीत्यपि सम्भाव्येत, परन्तु श्रुतिर्जीवा प्राणाद्युपाधयश्चेत्युभयेषामपि निर्गमनं भवतीति कथयति । अतो यत्र जीवस्य निर्गमनं निर्दिश्यते तत्राप्युपाधेरेव निर्गमनमस्तीति स्वीकारे पुनरुक्तिदोषो लगिष्यति । यथा घटस्य चलनक्रियातो घटाकाशस्य चलनक्रिया न भिन्ना, एवं भवन्मते प्राणाद्युपाधेः क्रियातो जीवस्य क्रिया भिन्ना भवितुं नार्हति ।

किञ्च प्राणाद्युपाधिक्रियां लक्ष्यीकृत्य जीवस्य निर्गमनं श्रुत्योच्यते चेत्, प्राणाद्युपाधिनिर्गमनतः पूर्वं जीवनिर्गमनकथनं निरर्थकमेव प्रमाणितं भवति । अत एषां दोषाणां निवृत्तये जीवात्मनः शरीराद्बहिर्निर्गमनमवश्यं स्वीकरणीयमेव । अत एव च जीवोऽणुरित्यपि मन्तव्यम् । **'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्'** इत्याद्या जीवस्य ब्रह्मणि प्रवेशं कथयन्त्यः स्मृतयोऽप्येवं चरितार्था भवन्ति, यतो हि मोक्षदशायामुपाधेरभावेनौपाधिकप्रवेशस्तु न संभवति, शुद्धं स्वरूपं च यदि व्यापकं चेत्कथं प्रविशेत्, अतोऽण्वेव ।

( २५–२६ ) **पूर्वपक्षी**—यदि **'ततो मां तत्त्वतो ज्ञात्वे'**ति प्रवेशनिरूपणं जीवोऽणुरिति प्रमाणीकरोति चेद्, ब्रह्मापि मध्यमपरिमाणमिति कुतो न प्रमाणीकरोति, यतो हि गगनवद्व्यापकाद्वस्तुनो न किञ्चिद्बहिरस्ति यत्तत्र प्रविशेत्, अणुपरिमाणे वस्तुनि चावकाशाभावादेव प्रवेष्टुं न शक्यते, किन्तु मध्यमपरिमाण एव प्रवेशः शक्यवचनः । यदि श्रुतिशिरोवचांसि ब्रह्म व्यापकमिति वदन्ति, अतो ब्रह्मणो व्यापकता गले पतिता चेद् , व्यापकतावशेनैष प्रवेशोऽपि गौण इति कुतो न गण्यते । किञ्च प्रमाणवचनानि यथा ब्रह्म व्यापकमिति वदन्ति, तथैव जीवो व्यापक इत्यपि वदन्ति । नापि च निखिलानि प्रमाणानि ब्रह्मनिरूपणप्रकरणान्तःपठितानि सन्ति । भगवद्गीतायां द्वितीयाध्याये मध्यमपाण्डवमुपदिशन्नाह भगवान्–**'नित्यः सर्वगतः स्थाणु'**रिति वचनेन जीवः **सर्वगतो** व्यापक इति । न चेह ब्रह्मनिरूपणप्रसङ्गगन्धोऽप्यस्ति । अतः प्रमाणानुरोधेन ब्रह्म व्यापकमिति स्वीकर्तव्यं चेज्जीवोऽपि व्यापकः स्वीक्रियताम् ।

( १७–२४–२८ ) **सिद्धान्ती**—याः श्रुतिस्मृतयो जीवनिरूपणप्रकरणे वर्तमाना अपि जीवो व्यापक इति कथयन्ति, ता हि व्यापकत्वप्रभृतीन् ब्रह्मधर्माञ्जीवे बोधयित्वा जीवो ब्रह्मांश इति प्रमाणीकर्तुं प्रयतन्ते, न तु जीवो व्यापक इति बोधयितुम् । अयमाशयः–**'अंशो नानाव्यपदेशात्' 'तद्गुणसारत्वात्तु तद्व्यपदेश'** इति व्याससूत्रद्वितयेन व्यक्तीक्रियते ।

## अणुजीवस्य व्यापकब्रह्मणि प्रवेशो नासम्भवः ।

किञ्चाणुजीवस्य व्यापकब्रह्मणि प्रवेशस्तु **'ब्रह्मैव सन् ब्रह्माप्येति'** इति श्रुत्योच्यते, अतोऽयमकामेनापि स्वीकरणीय एव । किञ्च प्रवेश एष गौणश्चेद्भगवान् वेदव्यासः केनापि सूत्रेणैवं सूचयेत्, न च सूचयति, प्रत्युत प्रवेशबोधकवचनानां मुख्योऽर्थो न बाध्यत इति **'अस्मिन्नस्य च तद्योगं शास्ती'** ति सूत्रेण वदति । अयं सूत्रार्थः—अस्मिन् ब्रह्मणि अस्य जीवस्य तद्योगं ब्रह्मभावानन्तरं लयं शास्ति श्रुतिः कथयति ।

( २५ ) किञ्च यौक्तिकविचारेणापि व्यापके ब्रह्मणि जीवस्य प्रवेशो नानुचितो भवितुमर्हति, यतो हि ब्रह्म विरुद्धधर्माधारम् । ब्रह्मणि व्यापकत्वपरिच्छिन्नत्वप्रभृतयः सर्वेऽपि परस्परविरुद्धधर्माः समाविशन्ति, अत एव **'समो मशकेन समो नागेन'** इति श्रुतिर्ब्रह्मस्वरूपं मशकसदृशं हस्तिसदृशं चेत्युभयमपि वक्ति । **'सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्'** इति श्रुतिरपि व्यापकस्य ब्रह्मणः सर्वत्र करचरणपरिच्छेदादीन् वदति । अतः प्रवेशश्रुतेरनुरोधेनेदृशविलक्षणब्रह्मस्वरूपस्य प्रवेशोचितौ बाह्याभ्यन्तरप्रदेशावस्तीति स्वीकारोऽपि न विरुध्यते ।

## आनन्दैश्वर्यादिधर्माणां प्राकट्यमेव 'ब्रह्मभाव'-शब्दार्थो, न तु जीवस्य ब्रह्मणा सहात्यन्ताभेदः ।

( २४ ) **पूर्वपक्षी—**'अस्मिन्नस्ये'ति व्याससूत्रेण यो जीवस्य ब्रह्मभावानन्तरं ब्रह्मणि लयः प्रतिपाद्यते, सोऽयं सर्वथा स्वीकारं नार्हति, यतो हि ब्रह्मभावोत्तरं जीवः स्वयं ब्रह्मैव, न चास्मादन्यत्किंचन ब्रह्मास्ति यत्रायं लीयेत, सर्वत्र वेदान्तेष्वेकमेव ब्रह्म प्रतिपाद्यते ।

किञ्च लयोत्तरं ब्रह्मणः सकाशाज्जीवो भिन्नोऽभिन्नो वा ? । भिन्नश्चेद् **'यत्र त्वस्य सर्वमात्मैवाभूत्'** इति श्रुतिर्विरुध्यते, इयं मोक्षदशायां भेदं निषेधति । एवमग्निविस्फुलिङ्गदृष्टान्तोऽपि भेदस्वीकारे विरुध्यते, यतः प्रवेशोत्तरं वह्नौ विस्फुलिङ्गा न विभिन्नाः प्रतीयन्ते । यद्यभिन्नश्चेद् , जीवस्याणुत्वमवास्तविकमिति प्रमाणितं भविष्यति, यतोऽणुत्वे वर्तमाने न वस्तुतोऽभेदः संभवतीति लयदशायामणुत्वाभावोऽवश्यं स्वीकरणीयः, अभावश्चावास्तविकस्यैव भवितुमर्हति ।

किञ्च यथा घटे नष्टे घटाकाशो महाऽऽकाशे लीयते, एवमविद्याद्युपाधौ प्रणष्टे जीवो ब्रह्मणि लीयत इति स्वीकारे जीवः सर्वदा ब्रह्मस्वरूप एवेति न लयदशायामपि जीवनाशापत्तिः, परन्तु विस्फुलिङ्गवज्जीवोंऽशोऽणुश्चेत्यङ्गीकारे तु मोक्षदशायामभेदे जीवस्वरूपनाशोऽप्यापद्यते । अतोऽस्मन्मतानुसारेण जीवब्रह्मणोर्भेद औपाधिक एवेति मन्तव्यम् ।

**सिद्धान्ती—**'**ब्रह्मैव सन् ब्रह्माप्येती**'ति श्रुतौ 'ब्रह्मैव स'न्नित्यंशस्य, जीवस्वरूपे

आनन्दैश्वर्यादिधर्माणां प्राकट्यमर्थः । अयमेव प्रथममस्माभिर्ब्रह्मभावशब्देनोक्तः । '**ब्रह्माप्येती**'त्यंशस्य च जीवो ब्रह्मणि लीयत इत्यर्थः । अतो नेह ब्रह्मद्वयस्वीकारापत्तिः काऽऽपि ।

लयोत्तरं च जीवो न ब्रह्मणोऽत्यन्तमभिन्नो, नापि च भिन्नः । तदानीं जीवो यादृशदशामासादयति तां '**स यथा सैन्धवखिल्य**' इति श्रुतिर्जललवणदृष्टान्तेन स्पष्टं निर्दिशति । यथा जले प्रक्षिप्तं लवणशकलं गलनोत्तरं न ततो भिन्नं प्रतिभाति, परन्तु भेदस्तु तत्रावश्यं स्वीकर्तव्यो भवत्येव, एवं जीवोऽपि लयोत्तरं न ब्रह्मतो भिन्नः प्रतीयते, तथापि भेदो विद्यत एव । अयमीदृशो भेदः '**निरञ्जनः परमं साम्यमुपैति**' '**गतिसामान्या**'-दिति सूत्रद्वयेन व्यक्तीक्रियते । तथाहि—'निरञ्जन' इति श्रुतेर्जीवो मोक्षदशायां ब्रह्मसदृशो भवतीत्येवाभिप्रेतं चेत्, 'निरञ्जनः साम्यमुपैती'त्येव वदेत्, न तु 'परम'—पदमधिकं प्रयुञ्जीत । यदि 'परमं साम्यम्' इति पदद्वयेन श्रुतिर्जीवब्रह्मणोरत्यन्ताभेदं वक्तुं वाञ्छति चेत्, अस्या अर्थं निर्णयन् भगवान् वेदव्यासः '**गतिसामान्यात्**' इति सूत्रे सादृश्यवाचकं 'सामान्य'—पदं न प्रयुज्यैतत्स्थाने ऐक्याभेदादीनि शब्दान्तराणि वदेद्येन तात्पर्यप्रतीतौ सारल्यं भवेत् । अत उभयोरेतयोर्यथास्थितस्वरूपविचारेण लयदशायां जीवब्रह्मणोः स्वल्पभेदमात्रासंवलितोऽभेदः संपद्यत इत्येव स्वीकर्तुमुचितम् ।

किञ्च यदा मोक्षदशायां जीवे आनन्दैश्वर्यादयो धर्माः प्रकटीभवन्ति, तदानीं ब्रह्मवज्जीवोऽपि विरुद्धधर्माधार एव । यथा यशोदोत्सङ्गमध्यासीनः शिशुरपि कृष्णः स्ववदने सर्वं विश्वं दर्शयतीति व्यापकः प्रमाणितो भवति, एवं जीवोऽणुरपि ब्रह्मभावोत्तरं व्यापककार्यकारितालाभेन व्यापकः प्रमाणितो भवति, परन्त्वणुपरिमाणं स्वरूपं तदानीमप्यक्षुण्णमेव । अत एव मोक्षदशायां लीना अपि जीवा ब्रह्मणोऽनुग्रहविशेषेण पुनराविर्भूय लब्धलीलाकलेवरा ब्रह्मणा सह विहरन्ति । यद्यणुत्वप्रणाशपूर्वकमत्यन्ताभेदः स्यात्, घटाकाशमहाकाशयोरिव वा भवत्संमतोऽत्यन्ताभेदः स्यात्, नेदं संभवेत् । अतो वह्निविस्फुलिङ्गयोरिव जीवब्रह्मणोस्तादात्म्यापरपर्यायो भेदसहिष्णुरभेद एव स्वीकर्तुमुचितः ।

## जीवानां लयोत्तरं पुनर्निर्गमनम् ।

**पूर्वपक्षी**—परममुक्तानां स्वरूपेण पुनराविर्भावः शरीरप्रवेशश्च न कस्यापि शास्त्रदृशः संमतो भवितुमर्हति, यतः शास्त्रेषु नानाजन्मार्जितकर्मवासनानां नाशानन्तरं मोक्षः संपद्यत इति प्रतिपाद्यते, कर्मवासना विना च न कस्यापि कलेवरस्य लाभः कथञ्चनापि शक्यवचनः । किञ्चाध्यासादन्यो न कश्चन जीवानां देहैः सह सम्बन्धः । यद्यध्यासोऽपि मुक्तान् स्पृशति चेन्मुक्तत्वमेव प्रणष्टम् । अतः '**यद्गत्वा न निवर्तन्ते**' '**न स पुनरावर्तते**' इत्यादीनि मुक्तानामपुनरावृत्तिवचनानि विरुध्यन्ते ।

**सिद्धान्ती**—परममुक्ता हि कर्मभिर्वासनाभिर्वा सांसारिकसुखदुःखभोगाय न कले-

वरं लभन्ते, किन्तु भगवतो निरतिशयदयामयाशयवशेन लब्धेष्वानन्दमयेष्वलौकिककलेवरेषु भगवता सह विहारं कर्तुं प्रविशन्ति। नापि शरीरसम्बन्धो मिथ्याज्ञानस्वरूपोऽध्यासात्मा, किन्तु सर्वात्मभावमूलको वर्तते। अतो मुक्तानां नेदं लीलादेहधारणं संसारसंसर्गावहम्। **'न स पुनरावर्तते'** इत्यादीनि वचनानि तु मुक्तानां पुनः संसारे परावर्तनं न भवतीत्येव वदन्ति, न तु लीलादेहलाभमपि निषेधन्ति। अतो नैषां विरोधः।

किञ्च भगवान् वेदव्यासः **'मुक्तोपसृप्यव्यपदेशात्'** इति सूत्रेण मुक्तजीवा भगवत्सन्निधिं सेवन्त इति वदति। इदं च न लीलादेहलाभं विना सम्भवति। किञ्च शङ्कराचार्यैरपि नृसिंहोत्तरतापिनीभाष्ये **'मुक्ता अपि लीलाविग्रहं कृत्वा भजन्ते'** इति पूर्वोक्तसूत्रफलिताशयोऽनूदितोऽस्ति। अतो मुक्तानां लीलाकलेवरलाभः सर्वथा स्वीकारमर्हत्येव।

## मोक्षस्य स्वरूपं साधनानि च।

यद्यपि भगवतोऽनुग्रहो योगमार्गकर्ममार्गादिषु सर्वत्रापेक्ष्यते, परन्तु पुष्टिमार्गस्तु केवलं निःसाधनजनश्रेयोजननप्रयोजन इति सर्वथाऽनुग्रहैकशरण एवास्ति। अस्मिन् पुष्टिपथे ये जीवा भगवताऽङ्गीक्रियन्ते, त एव लब्धलीलादेहा भगवत्सन्निधिसेवादावधिक्रियन्ते। ये तु मर्यादामार्गेऽङ्गीक्रियन्ते, ते ब्रह्मभावानन्तरमक्षरब्रह्मणि प्रवेशं लभन्ते, न तु लीलादेहलाभाय पुनराविर्भवन्ति। किन्तु जीवाः सर्वेऽपि भगवता स्वसेवार्थमेवाविर्भाविताः सन्ति, अतो भगवत्सेवा सर्वेषां धर्मः। भगवत्सेवयैव च सर्वविधपुरुषार्थप्रयासाः पुष्यन्ति फलन्ति च।

किञ्च जीवा भगवतो दासा, भगवांश्च तेषां स्वामी। जीवा नियम्या, भगवांश्च नियामकः। इदं जीवब्रह्मणोस्तारतम्यं न केवलं संसारदशायामेव, किन्तु मोक्षदशायामप्यक्षतावस्थमेवावतिष्ठते, अत एतदुपपत्तयेऽग्निविस्फुलिङ्गयोरिव जीवब्रह्मणोस्तादात्म्यं, मोक्षे च नात्यन्ताभेद इत्येव स्वीकर्तुमुचितम्। अविद्योपाधिपरतन्त्रं ब्रह्म जीव इति स्वीकारे तु न प्रवेशपुनर्निर्गमनप्रभृतीनां पूर्वोक्तानां निखिलानामप्युपपत्तिर्भवितुमर्हति। अत एव जीवाविद्यया जगत्प्रतीयत इत्यपि न वक्तुं शक्यते, यतो हि भावाज्ञानस्वरूपोऽविद्यानामोपाधिर्न कश्चन जीवेन सम्बद्धोऽस्ति यो जगत्प्रत्याययेत्। यतो नाविद्या जगत्प्रत्याययति, अत एव जगत् सत्यम्, जगत उपादानं कर्तृ च ब्रह्मेति वदन् वेदोऽपि नोपचरितार्थो, ब्रह्मापि च सविशेषं (सगुणम्)।

## ब्रह्म केवलं कर्तृ, न तूपादानम्।

(३०) **पूर्वपक्षी**—जगतो ब्रह्मोपादानं कर्तृ चेति न कस्यापि विश्वसनीयं भवितुमर्हति, यतो लोके न कश्चनैवंभूतोऽस्ति यो दृष्टान्ततयेमं समर्थयेत्। कुविन्दकुलालादीनि

यावन्ति कारणानि प्रत्यक्षीक्रियन्ते, तानि यस्योपादानानि, तदितरस्य कर्तॄणि, न त्वेकस्यैवोपादानानि कर्तॄणि च । किञ्च काममोहकोपप्रभृतिभिरनन्तदोषविशेषैः कलुषितकायमिदं जगत् । यद्यस्य ब्रह्मोपादानं चेद्, यथा कलशो मृत्स्वरूपः, एवमिमे दोषा अपि ब्रह्म स्वरूपा इति स्वीकृतिरावश्यिकी । न चेदं स्वीकर्तुं शक्यते, ब्रह्मणि दोषस्पर्शाभावात् । अतो ब्रह्म जगतः कर्तृ, न तूपादानमित्येव मन्तव्यम् ।

## ब्रह्मोपादानं कर्तृ च ।

**सिद्धान्ती**—यथोर्णनाभिरात्मनो नाना तनुतरतन्तून् प्रकटीकरोति, एवं ब्रह्मापि स्वरूपतः प्रपञ्चं प्रकटीकरोति । अयमेवाभिप्रायः **'तदात्मान॰ स्वयमकुरुते'**ति श्रुत्या प्रतिपाद्यते, अतोऽस्या अनुरोधेनायमवश्यं स्वीकर्तव्य एव । न हि श्रुतिभिर्भणितोऽर्थः स्वस्य सत्यताप्रमाणीकरणाय तर्कानुकम्पामपेक्षते । ये च काममोहकोपप्रभृतयो दोषाः प्रपञ्चे प्रतीयन्ते, ते सदोषदृष्टिविषया इत्यवास्तविका एव, न हि ते प्रपञ्चः परमात्मस्वरूप इति स्वीकारे बाधाविधानाय पर्याप्नुवन्ति ।

## ब्रह्माविकृतमेव परिणमति ।

यद्यपि लोके दधिदुग्धादिवस्तूनां परिणामो विकार इति सर्वैरपि साक्षात्क्रियते, परन्तु ब्रह्मणः प्रपञ्चरूपेण परिणमनं विकार इति न वक्तुं शक्यते, यतः **'अविनाशी वारेऽयमात्माऽनुच्छित्तिधर्मा'** इत्याद्या नाना श्रुतयो ब्रह्म निर्विकारमिति वदन्ति । नापीह लौकिकदृष्टान्तस्य लेशतोऽप्यनुग्रहोऽपेक्ष्यते, यतो हि ब्रह्म निरतिशयनिरपायानन्तशक्तिपात्रं विस्मयावहलीलावैभवमलौकिकं चेति लौकिकवस्तुभिः सह तुलना न भवतीत्येव युज्यते । भगवान् बादरायणोऽपि **'श्रुतेस्तु शब्दमूलत्वात्'** इति सूत्रेण ब्रह्मस्वरूप परामर्शे यथा वेदो वदति, तथैव स्वीकर्तव्यम्, लौकिकदृष्टान्तो नापेक्षणीय इत्याह । एतेन **'तदेजति तन्नैजति' 'अणोरणीयान् महतो महीयान्'** इत्यादीनां परस्परविरुद्धधर्मवाचिवेदवचनानां पारस्परिकविरोधपरिहाराय काऽपि नव्या व्यवस्था नापेक्ष्यत इत्यपि सिद्धम् । यतो हि ब्रह्मस्वरूपमेवंविधमाश्चर्यमयमस्ति, यत्र परस्परविरुद्धाः सर्वेऽपि धर्माः समाविशन्ति, न केऽपि विरुध्यन्ते ।

## ब्रह्म सर्वधर्मशून्यम् निर्गुणम् ।

( ३१ ) **पूर्वपक्षी**—अलौकिकताया आश्चर्यमयतायाश्च निर्वाहाय प्रापञ्चिकपदार्थापेक्षयोत्कृष्टं ब्रह्मेति स्वीकृतिरेव पर्याप्ता, नैतदर्थं परस्परविरुद्धधर्माणां ब्रह्मणि स्थितिरस्तीति स्वीकृतिरावश्यिकी प्रतिभाति । यदि श्रुतिभिर्भाषिताः परस्परविरुद्धा अप्यर्थाः स्वीकृतिमर्हन्ति चेद्, भगवान् बादरायणो विरोधपरिहारपूर्वकं सर्वासां श्रुतीनां व्यवस्थापनाय चतुरध्यायीमितां महतीं पश्चिममीमांसां न प्रणयेत् । यतः प्रणीता, अतस्तदनुसारेणैव सर्वं निर्णेयम् । इदमुक्तं हि तत्र सविशेषनिर्विशेषवाचिवचनानामर्थनिर्णये भगवता बादरायणेन—

**'अरूपवदेव हि तत्प्रधानत्वात्'**

भावार्थः—ब्रह्म न सविशेषम्, यतः सविशेषवाचीनि **'सर्वकामः सर्वगन्धः सर्वरसः'** इत्यादीनि श्रुतिशिरोवचनान्युपासनायामुपयोक्तुं शक्यन्ते, परन्तु **'अस्थूलमनणु'** इत्यादीनां निर्विशेषवाचिनां वचनानां ब्रह्मावबोधनादन्यत्र किञ्चन प्रयोजनमस्ति । अत एतानि ब्रह्मबोधने प्रधानानीत्येषामनुरोधेन निर्विशेषमेव ब्रह्म स्वीकर्तव्यम् ।

**'आह च तन्मात्रम्'**

भावार्थः—ब्रह्म सर्वधर्मशून्यमस्ति, यतः **'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनः, एवं वाऽरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव'** इति श्रुतिर्ब्रह्मणि स्वरूपभूतज्ञानातिरिक्तं न किञ्चिदस्तीति सर्वधर्मान्निषेधति ।

**'प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः'**

भावार्थः—बृहदारण्यके मूर्तामूर्तब्राह्मणे **'अथात आदेशो नेति नेती'**ति श्रुत्याऽत्रैव प्रकरणे पूर्वं प्रोक्तस्य मूर्तस्य पृथिव्यादिसदृशस्य दृश्यस्यामूर्तस्य वातादिसदृशस्यादृश्यस्य च ब्रह्मणि निषेधः क्रियते, अतो ब्रह्म निर्विशेषमेव ।

किञ्च ब्रह्म सविशेषमिति स्वीकारे याः श्रुतयो ब्रह्म सर्वविधभेदशून्यं व्यापकं चेति कथयन्ति, ता अपि विरुध्यन्ते, यतः सविशेषं वस्तु देशकालाभ्यां, पदार्थान्तरेण वाऽवश्यमेव परिच्छिन्नं भवति । परिच्छिन्नं च न व्यापकमिति वक्तुं शक्यते । एवं सविशेषवस्तु सर्वविधभेदशून्यमपि न भवति, यतः पदार्थान्तराभावे सजातीयविजातीयवस्तुकल्पितभेदभाजनं न भवति चेत्, स्वधर्मेभ्यस्त्ववश्यं भिद्यत एव ।

किञ्च ब्रह्मणः सविशेषतास्वीकारे **'समो मशकेन समो नागेने'**ति श्रुतिरपि बाधिका वर्तते, यत इयमेकस्मिन्नेव ब्रह्मणि नानापरिमाणानि निर्दिशति । एषां चोपपत्तिस्तदैव संभवति यदा ब्रह्म स्वयं सर्वविधपरिमाणशून्यं भवेत्, औपाधिकपरिमाणारोपेण च परिमाणशालि स्यात् । यथा कलशान्तर्गत आकाशः कलशपरिमितो गृहान्तर्गत आकाशो गृहपरिमितश्चेत्येवम् । यच्चैवंविधं न तत्सविशेषं भवितुमर्हति, यतः सविशेषवस्तुनः किमप्येकं परिमाणं निश्चितमेव भवति यत्परकीयपरिमाणारोपं प्रतिषेधति । यद्यपि कचन निजपरिमाणे वर्तमानेऽपि परकीयपरिमाणानामारोपः प्रेक्ष्यते, परन्तु यत्र वर्ण्यमानानां नानापरिमाणानां मध्ये इदं निजमित्येवं किञ्चिदेकं परिमाणं निश्चितं नास्ति, तत्र सर्वाण्यपि परिमाणान्यौपाधिकानीति स्वीकरणमेव न्यायोचितं भवति ।

किञ्च परिमाणप्रयोजकाः करचरणादयोऽवयवविशेषा हि लौकिकाः, ब्रह्म त्वलौकिकम्, अतो ब्रह्मणि परिमाणप्रयोजकानां करचरणादीनां स्वीकरणमपि न युज्यते । ब्रह्म सर्व-

भवनसमर्थं विरुद्धधर्माधारं, करचरणादयो विशेषाश्चालौकिका इति स्वीकृतिस्तु व्यर्थविस्तारमात्रपर्यवसायिनी । अतो ब्रह्म निर्विशेषं निर्गुणमित्येव मन्तुमुचितम् ।

## ब्रह्म सगुणं साकारं च ।

( ३७ ) सिद्धान्ती—'**अरूपवदेव हि तत्प्रधानत्वात्**' इत्यादीनि सूत्राणि ब्रह्म निर्विशेषं निर्गुणं चेति न प्रमाणीकुर्वन्ति, यतोऽत्र प्रकरणे, ब्रह्मणि जडजीवधर्मान्निर्दिशन्तीनां श्रुतीनामर्थविचारः प्रस्तुतोऽस्ति । अत्र प्रथममयं पूर्वपक्ष उक्तः—'**अस्थूलमनणु**' इत्याद्याः श्रुतयो ब्रह्मणि धर्मान् निषेधन्ति, '**सर्वकामः सर्वगन्धः सर्वरसः**' इत्याद्याश्च गन्धरसकामादीन् जडजीवधर्मान् ब्रह्मणि बोधयन्ति । इदं द्वयं परस्परविरुद्धम् । अतो विरोधपरिहाराय, यथा कलशचलनक्रिया कलशान्तर्गते आकाशे आरोप्यते, एवं जडजीवधर्मास्तत्र व्याप्ते ब्रह्मस्वरूपे '**सर्वकाम**' इत्यादिभिधर्मबोधिकाभिः श्रुतिभिरारोप्यन्ते, वस्तुतो ब्रह्म सर्वधर्मशून्यमस्ति । धर्मप्रतिषेधिकाः श्रुतयश्चोपाधिसम्बन्धरहितं ब्रह्म बोधयन्ति, अत एव उपाधिसम्बन्धलब्धावतारान् धर्मान् ब्रह्मणि निषेधन्ति ।

इमं पूर्वपक्षं प्रतिक्षिपन्निदमवदत्—'**वेदैश्च सर्वैरहमेव वेद्य**' इत्यादीनि प्रमाणानि सर्वेषां वेदवचसामेकं ब्रह्मैव बोध्यमिति कथयन्ति, अतो धर्मबोधिकाः श्रुतय औपाधिकधर्मान् वर्णयन्तीति न स्वीकर्तुं शक्यते । यत औपाधिका धर्माः वस्तुतो ब्रह्मस्वरूपानन्तर्गताः सन्ति । किञ्च धर्मबोधिकाः श्रुतयोऽनन्ताः, यदि सर्वत्रौपाधिकधर्माणामेव वर्णनं स्वीक्रियेत, वेदस्य भूयान् भागो ब्रह्मवर्णनतो वञ्चितस्तिष्ठेत् ।

इतः परं पुनरयं पूर्वपक्ष उक्तः—'पूर्वोक्तोभयविधश्रुतीनामनुरोधेन ब्रह्मणो निरुपाधिकं सोपाधिकं चेति रूपद्वयं स्वीकृत्य धर्मबोधिकाः श्रुतयः सोपाधिकं ब्रह्म वर्णयन्ति, धर्मनिषेधिकाश्च निरुपाधिकं ब्रह्म वर्णयन्तीति व्यवस्थापनं युक्तमिति' ।

इमं पूर्वपक्षमेवं दूषयामास—'ब्रह्मणः सोपाधिकं निरुपाधिकं चेति रूपद्वयं न स्वीकर्तुं शक्यते, यतः '**एकमेवाद्वितीयं ब्रह्म**' इत्याद्याः श्रुतयो ब्रह्मण्यनेकतां निषेधन्ति ।' अयं सर्वोऽप्यर्थो '**न भेदादिति चेन्न प्रत्येकमतद्वचनात्**' '**अपि चैवमेके**' इति सूत्रद्वयेनोक्तः।

एतदनन्तरं पूर्वोक्तनिखिलार्थपर्यालोचनयाऽयं प्रश्न उपस्थापितः—'यदि धर्मबोधिकाः श्रुतय औपाधिकधर्माणां, सोपाधिकस्य ब्रह्मणो वा वर्णनं न कुर्वन्ति चेत्, कस्यान्यस्य वर्णनं कुर्वन्ति ? । न हि शुद्धब्रह्मणो वर्णनमाभिः कर्तुं शक्यते, यत एता जडजीवसम्बन्धिधर्मान् वदन्ति, जडजीवसम्बन्धिधर्माश्च शुद्धे ब्रह्मण्यवस्थातुं नार्हन्ति ।

अस्य प्रश्नस्य समाधानाय निम्नोपन्यस्तानि सूत्राणि प्रणिनाय भगवान् वेदव्यासः—

**'अरूपवदेव हि तत्प्रधानत्वात्'**

भावार्थः—'**सर्वकामः सर्वगन्धः**' '**सर्वतःपाणिपादान्तम्**' इत्याद्या धर्मावयववर्णन-

पराः श्रुतयोपि शुद्धं ब्रह्मैव वर्णयन्ति, यतो ब्रह्मणो धर्मा अवयवाश्च ब्रह्मैव, न ततो भिद्यन्ते। यद्यपि लोके धर्मा अवयवाश्च धर्मिणो भिन्ना एवेति पश्यामः, परन्तु ब्रह्मणो धर्मा अवयवाश्च ब्रह्मणो भिन्ना इति न कथमपि मन्तुं शक्यते, यतः 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादीनि प्रमाणवचांसि यत्सर्वैर्वेदैर्ब्रह्मैव वेद्यमिति वदन्ति तद्विरुध्यते।

**'आह च तन्मात्रम्'**

भावार्थः—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः' इति श्रुतिर्ब्रह्म ज्ञानैकघनमेकरसमिति वक्ति, अतो ब्रह्मणो धर्मा अवयवाश्च ब्रह्मणोऽभिन्ना इति सिद्ध्यति।

**'सर्वत्र प्रसिद्धोपदेशात्'**

भावार्थः—'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः' इति श्रुतौ तदेव ब्रह्मोपदिश्यते यत्सर्वत्र वेदान्तेषु प्रसिद्धमस्ति।

एतैर्धर्मबोधिका अवयवबोधिकाश्च श्रुतयो ब्रह्मबोधिका एवेति सिद्ध्यति। इतः परं धर्मनिषेधिकानां 'अस्थूलमनणु' इत्यादिश्रुतीनामाशयं विशदीकुर्वन्निदं जगाद—

**'दर्शनाच्च'**

भावार्थः—श्रुतिस्मृतिप्रत्यक्षैः परस्परविरुद्धानां नाना धर्माणामाधारो ब्रह्मेति प्रमाणीक्रियते, अतः 'अस्थूलमनणु' इत्याद्याः श्रुतयः 'सर्वकामः सर्वगन्धः इत्यादिभिर्ब्रह्मणि बोधितान् धर्मान्निषेद्धुं न शक्नुवन्ति, यत एता यान् धर्माभावान् निर्दिशन्ति ते ब्रह्मणि विद्यन्ते। धर्मबोधिकाश्च यान् धर्मांस्तेऽपि सन्ति। ब्रह्मणः स्वरूपमेवं विलक्षणं, यत्र परस्परविरुद्धाः सर्वेऽपि समाविशन्ति।

युक्त्याऽपि परस्परविरोधं परिजहार सूत्रेणानेन—

**'प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः'**

भावार्थः—'अस्थूलमनणु' इत्याद्या धर्मनिषेधिकाः श्रुतयो ब्रह्मणि केवलं प्रापञ्चिकधर्मान्निषेधन्ति, धर्मबोधिकाभिः श्रुतिभिरुक्तान् सर्वकामत्वप्रभृतीन् धर्मान्न निषेधन्ति, यतो धर्मनिषेधानन्तरं पुनस्तत्रैव प्रकरणे धर्मा बोध्यन्ते। तथाहि—'अस्थूल' मित्याद्याः श्रुतयो हि बृहदारण्यके गार्गीब्राह्मणे सन्ति। तत्र प्रथमम् 'अस्थूलमनणु' इत्यादिश्रुतिभिर्धर्मा निषिद्ध्यन्ते, अनन्तरं च तत्रैव 'एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति श्रुत्या ब्रह्मणः प्रशासनधर्मः प्रतिपाद्यते। एवं तैत्तिरीयोपनिषदि 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुत्यंशेन प्रथमं ब्रह्मणि वाङ्मनसस्पर्शो निषिध्यते, अनन्तरं च 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इति शेषश्रुत्यंशेन ब्रह्मानन्दवेदनं वदता ब्रह्मणि वेदन साधनं मनःस्पर्शस्तत्सहचरितो वाक्स्पर्शश्च स्वीक्रियते। एवमितरेष्वपि कतिपयप्रकरणेषु धर्मनिषेधानन्तरं पुन-

धर्मा बोध्यन्ते । यदि धर्मनिषेधिकाभिः श्रुतिभिः श्रुत्युक्ताः सर्व एव धर्मा निषेद्धुमिष्यन्ते चेत्, सर्वत्र प्रकरणेषु धर्मनिषेधतः पूर्वमेव धर्मा बोधनीयाः, येन वेदोक्ता एव धर्मा निषिद्ध्यन्त इति विवेके सारल्यं भवेत् । परन्त्वेवं न कृतम्, अनेन ज्ञायते—निषेधः प्रापञ्चिकधर्माणां, विधानं चालौकिकधर्माणामस्ति । अतो धर्मबोधिकाधर्मनिषेधिकाश्रुत्योः परस्परं न कश्चन विरोधगन्धः ।

यद्यपि कामगन्धादयो धर्मा नामसाम्येन लौकिका इव प्रतीयन्ते, परन्तु सर्वशब्दसमभिव्याहृताः 'सर्वकामत्वं' 'सर्वगन्धत्वं' 'सर्वतःपाणिपादान्त'मित्येवंरूपा लोके न क्वाप्येकत्राधिकरणे दृष्टा इत्यलौकिका एवेत्यवश्यं स्वीकर्तव्यम् । एवं **'यतो वाचो निवर्तन्ते'** इति श्रुतावपि पूर्वार्धे निषेधो लौकिकवाङ्मनसस्पर्शस्य, उत्तरार्द्धे स्वीकारश्चालौकिकवाङ्मनसस्पर्शस्येति सिद्ध्यति ।

तथा च मूर्तामूर्तब्राह्मणे यत्प्रथमं **'द्वे वा व ब्रह्मणो रूपे मूर्तं चैवामूर्तं च'** इति श्रुत्या ब्रह्मणो मूर्तममूर्तं चेति रूपद्वयं वर्णितम् । अनन्तरं च **'अथात आदेशो नेति नेती'**ति श्रुत्या सामान्यतो निषिद्धम् । तत्र न मूर्तामूर्तरूपयोर्ब्रह्मणो वा निषेधः, किन्तु मूर्तामूर्तरूपे ब्रह्मणो, लोकदृष्ट्या यादृशी परिच्छिन्ने लौकिके च प्रतीयेते तादृशी न स्तः इति लौकिकतापरिच्छेदयोरेव निषेधः । अन्ततश्चायं निषेधो ब्रह्मणो मूर्तामूर्तरूपे अपि तादृशे यादृक् **'सर्वतःपाणिपादान्त'**मिति श्रुत्युक्तं रूपमस्तीत्यर्थे पर्यवस्यति ।

**पूर्वपक्षी—**'प्रकृतैतावत्त्व'—शब्दयोर्मूर्तामूर्तरूपे एवार्थो भवितुमर्हति, यतः 'प्रकृत'—शब्दः 'प्रस्तुत'—शब्दपर्यायतया सर्वत्र प्रसिद्ध एव । **'अथात आदेश'** इति श्रुतेः पूर्वं चेह प्रकरणे मूर्तामूर्तरूपयोर्वर्णनं प्रस्तुतमस्ति । एतावच्छब्दश्च सन्निहितमर्थं वदति । अतो द्वावपि मिलित्वा प्रस्तुतं सन्निहितं च पूर्वोक्तं मूर्तामूर्तरूपमेवार्थं वदिष्यतो, न त्वन्यम् । अनयोर्बोधकशक्तिं सङ्कोच्य केवलं लौकिकता परिच्छेदश्चार्थ इति कथनं सर्वथाऽनौचित्यमेव प्रकटीकरोति ।

**सिद्धान्ती—**पूर्वोक्तयोर्मूर्तामूर्तरूपयोर्बोधाय केवल'मेताव'—च्छब्दप्रयोगः पर्याप्तोऽस्ति, यतोऽयमितिशब्दसदृशोऽर्थेन । अतो यथा भवन्मतानुसारेण **'नेति नेति'** इति श्रुताविति—शब्देन मूर्तामूर्तरूपे बोधयितुं शक्यते, तथात्रापि 'एताव'—च्छब्देन बोधयितुं शक्ष्यते । एतदर्थं 'प्रकृत'—शब्दप्रयोगो नापेक्ष्यते । यदि 'एताव'—च्छब्दो बुद्धिविषयमर्थं कथयति, न तु प्रकरणे प्रस्तुतम् । अतः प्रकरणे प्रस्तुतं मूर्तामूर्तरूपमर्थं बोधयितुं 'प्रकृत'—शब्द—प्रयोगोऽवश्यमपेक्षितश्चेत्, केवलं 'प्रकृत'—शब्द एव प्रयुज्यताम् । अस्मिन् वर्तमाने 'एताव'च्छब्दोऽनावश्यक एव । इत्थं च भवन्मतानुसारेणार्थे स्वीकृते 'प्रकृतैताव'—च्छब्दयोरन्यतरोऽवश्यं व्यर्थीभवत्येव । अतोऽस्मदभिप्रायानुसारेणैतच्छब्दद्वयस्य लौकिकता परिच्छेदश्चेति पूर्वोक्तार्थौ नितान्तं युक्ताविति सिद्ध्यति । किञ्च 'प्रकृत'—शब्दतो

लब्धावतारस्य 'प्राकृत' शब्दस्य 'लौकिक'—शब्दपर्यायतया प्रयोगः काव्यादिष्वपि बहुशोऽनुभूयत एव । 'एताव'—च्छब्दश्च परिच्छिन्नवस्तुवाचक इत्यपि सर्वसंमतम् । अत उभयोर्भावप्रत्ययान्तयोः ( 'प्रकृतैतावत्त्व' शब्दस्य ) लौकिकता परिच्छेदश्चार्थौ गौणाविति न कथमपि वक्तुं शक्यते । अतः 'प्रकृतैतावत्त्व'मिति सूत्रेणापि ब्रह्म सविशेषमित्येव प्रमाणीक्रियते, न तु ब्रह्म निर्विशेषमिति ।

## उपासनार्थमाविद्यकधर्मा ब्रह्मण्यारोप्यन्ते ।

( ३१-३४ ) **पूर्वपक्षी**—श्रुतिशिरसां भूयोभागेषु ब्रह्मण उपासना निरूप्यते । उपासना च निर्विशेषस्य ब्रह्मणो न भवितुमर्हति । अतः श्रुतय आविद्यकधर्मानारोप्योपासनासिद्ध्यै ब्रह्म सविशेषमिति कथयन्ति ।

यच्च व्याससूत्रेषु ब्रह्म सविशेषमित्युच्यते, तस्यापि तात्पर्यं सविशेषं स्वरूपं वस्तुतो ब्रह्मेति मत्वोपास्यते चेत्, उपासना फलवती भवतीत्येव, न तु ब्रह्म सविशेषमिति । किञ्च सविशेषस्वरूपं वस्तुतो ब्रह्म चेत्, **'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'** इति श्रुतिः सविशेषमुपास्यस्वरूपं ब्रह्म नेति न वदेत् ।

(३८) किञ्चेमा निम्नोपन्यस्ताः श्रुतयो ब्रह्मस्वरूपमप्रकाश्यमदृश्यमज्ञेयं चेति वदन्ति । तथाहि—

**'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥'**

अर्थः—सूर्यचन्द्रताराविद्युद्वह्नीनां प्रकाशो यत्स्वरूपं न स्पृशति, यदविरोधेन यत्प्रकाशेन चेदं सर्वं प्रकाशते तद्ब्रह्म ।

**'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा'**

अर्थः—नयनेन वाचा देवैस्तपसा कर्मणा च यन्न ज्ञायते तदेव ब्रह्म ।

**'पराञ्चि खानि व्यतृणत्स्वयंभूः'**

अर्थः—स्वयम्भूरिन्द्रियाणि ब्रह्मपराङ्मुखानि चक्रे ।

यदि ब्रह्म सविशेषं चेत्, इमाः श्रुतयो ब्रह्माप्रकाश्यमदृश्यमज्ञेयं चेति न वदेयुः, यतः सविशेषमवश्यमेव प्रकाश्यं दृश्यं ज्ञेयं च भवति । अतो ब्रह्म निर्विशेषमेवेति मन्तव्यम् ।

## ब्रह्मणो धर्मा वास्तविका एव, न त्वविद्याकल्पिताः ।

( ३२ ) **सिद्धान्ती**—याऽविद्या विशेषान् कल्पयित्वा ब्रह्मस्वरूपमुपासनायोग्यं करोति, सा किं ब्रह्मणि वसति जीवे वा ? । ब्रह्मणि चेत्तस्मिन्नेव धर्मविशेषाणां कल्पना नानया कर्तुं शक्यते, यतो लोके, द्रष्टुरेव दोषैर्व्यावहारिकेषु दृश्यपदार्थेषु प्रातिभासिकपदार्थानां

कल्पना प्रत्यक्षीक्रियते । शुक्तौ रजतस्य रज्जौ सर्पस्य च कल्पना द्रष्टुरिन्द्रियगतैर्दोषैरेव क्रियते । यदि शुक्तिरज्जुगतैर्दोषैः क्रियते चेत्सर्वेषां रजतसर्पयोर्भ्रमः स्यात्, यतः शुक्तिरज्जुगतदोषाणां भ्रामकता सर्वत्र समाना । किञ्चैवं सत्येकस्य द्रष्टू रजतभ्रमे सर्पभ्रमे च निवृत्ते सर्वेषां निवर्तिष्यते, यतो भ्रमनिवृत्तिर्दृश्यदोषाणां नाशं विनाऽभिभवं विना वा न भवितुमर्हति । लब्धजन्मानौ च नाशाभिभवौ कस्यचिद् द्रष्टुर्भ्रमं निवर्तयतः, कस्यचिन्नेति तु निर्हेतुकतया सर्वथा स्वीकर्तुमक्षमम् । इत्थं च दृष्टान्तादर्शनेन ब्रह्मणि वर्तमानाऽविद्या तत्रैव धर्मविशेषान् कल्पयतीत्येकान्तेनाशक्यवचनमेव ।

यद्यविद्या जीवे वसन्ती सती ब्रह्मणि धर्मविशेषान् कल्पयति चेत्, विनैवाविद्यासम्बन्धं ब्रह्म सविशेषमिति सिद्धम् । यतो ब्रह्मणः साक्षात्कारं विना ब्रह्मणि जीवाविद्यया धर्मविशेषाणां कल्पना न कर्तुं शक्यते । लोके सर्वत्र साक्षात्क्रियमाणेष्वेव पदार्थेषु प्रातिभासिकाः कल्प्यन्त इत्यसकृत्प्रत्यक्षीकुर्मः ।

ब्रह्मणः साक्षात्कारोप्याविद्यक इति तु न विदुषां भद्रादरभाजनं भवितुमर्हति, यत एवं स्वीकृते भूयांसि प्रमाणवचनानि विरुद्ध्यन्ते । तथाहि—**'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्'** इति श्रुतिर्विद्वान् मुमुक्षुरन्तर्दृष्टिः सन् ब्रह्म प्रत्यक्षीचकारेति वदति । मुमुक्षुणा प्रत्यक्षीक्रियमाणं ब्रह्म च नाविद्यकं भवितुमर्हति, आविद्यकस्य मोक्षेऽनुपयोगात् । किञ्च **'यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः'** इति वचनमपि त्रिगुणात्मिकाया अविद्याया नाशानन्तरमात्मदर्शनं भवतीति वदति ।

किञ्च ब्रह्मणः साक्षात्कार आविद्यक इति स्वीकारेऽन्योन्याश्रयदोषोऽप्यापतति । तथाहि—अविद्या ब्रह्मणि धर्मविशेषान् कल्पयितुं तदा शक्ष्यति, यदा ब्रह्म दृश्यं भविष्यति । ब्रह्म च दृश्यं तदा भविष्यति, यदाऽविद्या तत्र दृश्यत्वप्रयोजकान् धर्मविशेषान् कल्पयिष्यति । अतो ब्रह्मणः साक्षात्कारो नाविद्यकः, किन्तु वास्तविक इति स्वीकरणमेव रमणीयम् ।

( ३८ ) **'न तत्र सूर्यो भाति'** इत्याद्याः श्रुतयस्तु केवलं सूर्यचन्द्रादयः प्रकाशकपदार्था इन्द्रियाणि च न स्वसामर्थ्येन ब्रह्मस्वरूपं प्रकाशयितुं शक्नुवन्तीत्येव वदन्ति, न तु ब्रह्मस्वरूपं सर्वथाऽप्रकाश्यमदृश्यमज्ञेयं चेति वदन्ति । एवं न चेद् **'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात्' 'मनीषितानुभावोऽयं मम लोकावलोकनम्'** इत्यादिवचननिचयेन भगवान् 'मया प्रसन्नेन रूपं प्रदर्शित'मित्यादि न वदेत् । भगवान् वेदव्यासोऽपि **'अपि संराधने प्रत्यक्षानुमानाभ्याम्'** इति सूत्रेण भक्त्या भगवान् प्रत्यक्षीभवतीति न वदेत् । अतो 'न तत्रे'त्यादिश्रुतीनामुपर्युक्त एवाशयः ।

( ३१-३२ ) **पूर्वपक्षी**—दृश्यदर्शकभेदो हि अविद्यैकहेतुः । यतोऽयमविद्यादशाया-

मेव प्रतीयते, न परमार्थदशायाम्। परमार्थदशा हि मोक्षदशा, तस्यां तु **'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'** इति श्रुतिर्दर्शनश्रवणादिक्रियाणामभावं वदन्ती दृश्यदर्शकभेदस्याप्यभावं प्रमाणीकरोति। अभावश्चाविद्यकस्यैव भवितुमर्हति। अतो ब्रह्मणो दृश्यस्वरूपमप्याविद्यकमेवेति निश्चीयते। यच्च **'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्'** इति श्रुतौ ब्रह्मणः साक्षात्कारो वर्ण्यते, तदप्याविद्यकस्यैव ब्रह्मस्वरूपस्य, न तु शुद्धस्य। अत्र शुद्धब्रह्मबोधकस्य 'प्रत्यगात्मान' मिति पदस्य प्रयोगस्तु सगुणब्रह्मणो मूलस्वरूपं निर्गुणं ब्रह्मेत्याशयेन क्रियते, न तु निर्गुणब्रह्मणः साक्षात्कारो भवतीत्याशयेन। एवं **'यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः'** इति वचनेऽपि 'गुणापाये' पदेन साऽवस्था बोध्यते, यस्यां प्रारब्धनाशाभावेन भर्जितबीजसदृशी ज्ञानदग्धाऽप्यविद्याऽनुवर्तते। अतोऽनेनाप्याविद्यकस्य रूपस्यैव दर्शनं निरूपयितुं शक्यते, न तु शुद्धस्य।

**सिद्धान्ती—'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' 'यद्धि पश्यन्ति मुनयः'** इति वचनद्वये ब्रह्मण आविद्यकं दर्शनं निरूप्यत इति सर्वथा न वक्तुं क्षमम्, यतोऽत्र मोक्षोपयोगि दर्शनं निरूप्यते। मोक्षे चोपयोगः शुद्धब्रह्मदर्शनस्यैव भवितुमर्हति, न त्वाविद्यकदर्शनस्य, यतो मोक्षदशायां **'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'** इति श्रुतिर्ब्रह्मदर्शनेन हृदयग्रन्थिसंशयकर्माद्युच्छेदो भवतीति वदति। यदि दर्शनमाविद्यकं स्याच्छ्रुतिर्हृदयग्रन्थिसंशयोच्छेदोऽस्य फलमिति न वदेत्। आविद्यकदर्शनं हि भ्रमात्मकं भवति। न तेन हृदयग्रन्थिः संशयो वा विनश्यति। यच्च **'कश्चिद्धीरः प्रत्यगात्मान'**मिति श्रुतौ शुद्धब्रह्मबोधकस्य 'प्रत्यगात्मान' मितिपदस्य प्रयोगः सगुणब्रह्मणो मूलरूपं निर्गुणं ब्रह्मेत्याशयेन कृतोऽस्तीत्युक्तम्, तन्नितान्तमुपहासस्थानमेव, यत इहेदृशाशयेन प्रयोगकरणस्य प्रयोजनं नास्ति।

(३३) किञ्च ब्रह्मदर्शनस्याविद्याकल्पितत्वे यानि वचनानि तपोभक्तिप्रभृतिभिर्ब्रह्मदर्शनं भवतीति वदन्ति, तान्यपि विरुध्यन्ते, यतो हि आविद्यकदर्शनं भ्रमः। न च श्रुतिविहितानामाशयशुद्धिकारकाणां साधनानां फलं भ्रमो भवितुमर्हति। भ्रमो हि दूषितचित्ते उत्पद्यते। किञ्च भ्रमोत्पादनाय त्वविद्यैव पर्याप्ताऽस्ति। अतोऽत्र दर्शने शास्त्रेणोपदिश्यमानस्तपःप्रभृतिसाधनानां विनियोग एव व्यर्थीभवति।

किञ्च सृष्टिसमये तु जीवाविद्या ब्रह्मणि धर्मविशेषान् कल्पयतीति कथञ्चिदपि शक्यसंभवं भवितुमर्हति, परन्तु महाप्रलये न कश्चनैवंविधो जीवो यः स्वाविद्यया किमपि कल्पयेत्। अतस्तदानीं वर्तमानानां नारायणशयनादीनामुपपत्तिर्न कथमपि जीवाविद्यया सम्पादयितुं शक्या। एवं **'यो ब्रह्माणं विदधाति पूर्व'**मिति वेदेनावेद्यमानो ब्रह्मप्रादुर्भावोऽप्यसम्भव इति प्रमाणीकृतं भवति, यत एतत्प्रादुर्भावावसरे नेश्वराद्भिन्नः कश्चन

द्रष्टाऽस्ति यः स्वेनाविद्यकभ्रमेणैनं कल्पयेत् । ईश्वरश्च नित्यनिखिलयथार्थज्ञानवानस्तीति न भ्रमभाजनं भवितुं क्षमः ।

( ३३ ) **पूर्वपक्षी**—यथा स्वप्ने दृष्टेन भयावहवस्तुना व्यवहारदशायां निद्राभङ्गो भवति, एवमाविद्यकेन ब्रह्मदर्शनेन परमार्थमोक्षोऽपि भवितुमर्हति । अतः 'कश्चिद्धीर' इत्यादिवचनेषु शुद्धब्रह्मणः साक्षात्कारो निरूप्यत इति स्वीकारः सर्वथाऽनावश्यक एव ।

किञ्च वेदविहितानि ज्ञानोपासनाप्रभृतीनि साधनानि, चित्तशुद्ध्यादीनि तदीयफलानि चेति सर्वमप्याविद्यकमेव । अत एतैः साधनैर्जायमानं ब्रह्मदर्शनमप्याविद्यकमिति कथनं न कथमप्यनौचितीपात्रमिति वक्तुं शक्यते । किञ्च वेदोक्तकर्मणां फलं भ्रमो न भवितुं क्षम इत्यपि शास्त्रपरिचयविरहैकनिबन्धनमेव, यतः **'यदा कर्मसु काम्येषु'** इति श्रुतिः काम्यकर्मभिः स्वप्ने स्त्रीभ्रमो भवतीति स्पष्टमेव वक्ति । इत्थं च, ब्रह्मदर्शनं नाविद्यकं, किन्तु पारमार्थिकमिति मत्वैतदनुरोधेन ब्रह्मस्वरूपं सविशेषमिति स्वीकारः सर्वथाऽसङ्गत एवेति सिद्ध्यति । अतो यथा मधुविद्यायां सूर्यस्य मधुरूपेण निरूपणं केवलं काल्पनिकं, तथा ब्रह्मणः सविशेषतावर्णनमपि सर्वं काल्पनिकमेवेत्यकामेनापि मञ्जूरीकरणीयम् ।

**सिद्धान्ती**—आशयशुद्धिर्निष्कामकर्मभिः संपाद्यते, न तु काम्यकर्मभिः । काम्यकर्मणां तु स्वयं भगवानपि गीतायां **'गतागतं कामकामा लभन्त'** इत्यादिवचनैरपकर्षं प्रदर्शयति । अतः 'यदा कर्मसु' इति श्रुतिर्यत्काम्यकर्मभिः स्वप्ने स्त्रीभ्रमो भवतीति कथयति, तन्नानुचितम्, परन्त्वेतावता, नित्यनैमित्तिकादीनां निखिलानामपि वेदविहितानां साधनानां भ्रमो भ्रमकल्पितं वा फलमिति न प्रमाणीकर्तुं शक्यते, यतः **'तपो मे हृदयं साक्षात्' 'तनुर्विद्या क्रिया कृतिः'** इत्यादीनि वचनानि तपःप्रभृतीनि साधनानि भगवदङ्गभूतानीति वदन्ति । यद्येतानि, दर्शनादीनि फलानि वैतेषामविद्याकल्पितानि स्युः, अङ्गभूतानीति न वदेयुः । किञ्चाविद्याकल्पितानीति स्वीकारे यदि सर्वेषां सविशेषवर्णनानां यथोचितसङ्गतिर्भवितुमर्हति चेत्तदा तु स्वीकारोऽपि युज्यते, परन्तु नारायणशयनमहाप्रलयब्रह्मप्रादुर्भावाद्या नानैवंविधाः श्रुतिस्मृतिपुराणप्रमाणाः कथाः सन्ति यासां सङ्गतिर्जीवाविद्यया न कथमपि सम्पादयितुं पार्यते । अत उद्देश्यैकदेशे आविद्यककल्पनास्वीकारः सर्वथाऽपार्थ एव ।

किञ्च मधुविद्यायां वर्तमानं **'आदित्यो वै देवमधु'** इति सूर्यवर्णनं भगवान् वेदव्यासोऽभ्युपगमसिद्धान्तानुसारेण काल्पनिकमित्युक्तवान्, न तु स्वमतानुसारेण । यतः साङ्ख्यवादिभिः **'अजामेकां लोहितशुक्लकृष्णाम्'** इति श्रुतिं पुरस्कृत्य अनादिप्रकृतिरेव जगद्रचयतीति यदुक्तं, तस्य निषेधः **'कल्पनोपदेशाच्च मध्वादिवदविरोध'** इति प्रकरणे प्रस्तुतोऽस्ति । अत्रेदमुक्तम्—'अजामेका'मिति श्रुतावनादिप्रकृतिर्न वर्ण्यते, किन्तु पर-

मात्मनः सकाशात्प्रथममुत्पन्ना देवता वर्ण्यते । यथाऽजा स्वल्पं दुग्धं ददाति, एवमियं देवताऽप्युपासकाय स्वल्पं फलं दातीत्यजाशब्देनोच्यते, वस्तुत इहाजाशब्दस्य नानादिप्रकृतिरर्थः । एवं **'लोहितशुक्लकृष्णाम्'** इति पदस्यापि **'यदग्ने रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपाम्'** इति श्रुत्या स्वयं व्याख्यानं कृतमस्ति । अतोऽस्य सत्त्वरजस्तमाँस्यर्थ इति न कथमपि वक्तुं शक्यते । एतत्सर्वमुक्त्वाऽजाशब्दस्य गौणार्थस्वीकारे वादिबुद्धिसमाधानाय परमतानुसारेण सम्भवमापाद्योक्तमधुविद्यावर्णनं दृष्टान्ततयोपन्यस्तमस्ति । अतः सर्वेषां सविशेषवर्णनानां गौण एवार्थ इति समर्थनाय नेदं शक्नोति । किञ्च स्वमतानुसारेणापि यदि मधुविद्यावर्णनस्य काल्पनिकत्वमुक्तं स्याद्भगवता व्यासेन, तथापि सर्वाणि सविशेषवर्णनानि काल्पनिकानीति नानेन सिद्ध्यति । यदि सर्वाणि सविशेषवर्णनानि काल्पनिकानि चेद्, मधुविद्यावर्णनस्येव सर्वेषामपि काल्पनिकतां केनचन सूत्रेण वदेत् । अतः स्वेच्छयैव सविशेषवर्णनानां काल्पनिकताकथनं नितान्तमनुचितमेव ।

**पूर्वपक्षी**—सविशेषस्वरूपाण्युपास्यानि सन्ति, ब्रह्म च नोपास्यम्, यतः **'नेदं यदिदमुपासते'** इति श्रुतिर्ब्रह्मण उपासनां निषेधति । अत इतो विरुद्धं सविशेषं ब्रह्मेति न स्वीकर्तुं शक्यते । सविशेषवाचिन्यः श्रुतयश्च मायाऽवच्छिन्नं चैतन्यं, यद्धि शास्त्रेण सगुणं ब्रह्म, ईश्वर इति चोच्यते, तद्वर्णयन्ति, यतः सृष्टिप्रलयप्रभृतीनि सर्वाण्यपि श्रुतिपठितानि कार्याणीदमेव करोति । उपास्यतेऽपि जनैरिदमेव ।

( ३३–३७ ) **सिद्धान्ती**—ब्रह्मणः सगुणनिर्गुणस्वरूपयोर्वास्तविकोऽवास्तविको वा न कोऽपि भेदः स्वीकर्तुं शक्यते, यतः **'अथातो ब्रह्मजिज्ञासे'**ति सूत्रेण भगवान् वेदव्यासो निर्गुणब्रह्मणो विचारं प्रतिज्ञायानन्तरं तदेव ब्रह्म **'जन्माद्यस्य यतः शास्त्रयोनित्वात्'** इति सूत्रेण जगज्जन्मादिकारणं **'अन्तस्तद्धर्मोपदेशात्'** इति सूत्रेणोपास्यं चेत्यवादीत् । यदि जगज्जन्मादिकारणं सगुणमुपास्यं ब्रह्म निर्गुणब्रह्मणो भिन्नं भवेत्, अत्र पूर्वापरविरोधः स्यात् । किञ्च **'ईक्षतेर्नाशब्दम्'** इति सूत्रे यज्जगज्जन्मादिकारणं ब्रह्मस्वरूपं प्रतिपादितं, तत्र निष्ठावतः पुरुषस्येतः परतमेन **'तन्निष्ठस्य मोक्षोपदेशात्'** इति सूत्रेण मोक्षोऽप्यङ्गीकृतोऽस्ति । यदि युष्मन्मतानुसारेण जगज्जन्मादिकारणं शुद्धं ब्रह्म न चेत्, तत्र निष्ठावतश्च चित्तशुद्धिरेव फलं चेत्, 'मोक्षोपदेशात्' इत्यस्य स्थाने 'चित्तशुद्ध्युपदेशात्' इति वदेत् ।

किञ्च **'सर्वत्रप्रसिद्धोपदेशात्'** इति सूत्रेणैकं ब्रह्मस्वरूपं सर्वत्र वेदान्तेषु प्रसिद्धमस्तीत्युक्तं भगवता व्यासेन । यदि सगुणनिर्गुणयोर्भेदः स्यात्, किमप्येकं ब्रह्म सर्ववेदान्तप्रसिद्धं न वदेत् । न हि युष्मन्मते निर्गुणसगुणयोरन्यतरत्किमपि सर्ववेदान्तप्रसिद्धं भवितुमर्हति । **'सर्वकामः सर्वगन्धः'** इत्यादिवेदान्तेषु सगुणं ब्रह्म प्रसिद्धमस्ति । **'अस्थू-**

लमनणु' इत्यादिषु च निर्गुणं ब्रह्म प्रसिद्धमस्ति । अतो युष्माकमभिमता सगुणनिर्गुण-भेदकल्पना सूत्रैर्विरुध्यत इति न सर्वथा स्वीकर्तुं शक्या ।

यच्च **'यन्मनो न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'** इति श्रुतिं पुरस्कृत्य शुद्धं ब्रह्म न केनाप्युपासनीयं भवितुमर्हतीति सिद्धान्तितं, तदप्यविचारमूलकमेव, यतोऽत्र श्रुतौ **'तदेव ब्रह्म त्वं विद्धि नेदम्'** इत्यन्तेन भागेन यन्मनोऽगोचरं मनःप्रकाशकं च तदेव ब्रह्मेति जानीहि, न त्विदं जीवेन्द्रियादिस्वरूपमित्युक्तम् । भूयोऽपि तन्मनःप्रकाशकं ब्रह्म किमित्याकाङ्क्षायां **'यदिदमुपासते'** इत्यंशेन यदिदं वैदिका उपासत इति प्रदर्शितम् । अतो नास्तीह श्रुतौ कश्चिदप्येवंविधोंऽशो येन ब्रह्म नोपास्यमिति प्रमाणितं भवेत्, प्रत्युत 'यदिदमुपासते' इति चतुर्थचरणेन उपास्यमित्येव सिद्ध्यति ।

यच्च युष्माभिरस्य चतुर्थचरणस्य **'यदिदमुपासते नेदं ब्रह्मे'**त्यन्वयोऽङ्गीकृतः, स तु नितान्तमेव प्रतिकूलः, यत एवं वक्तुमिच्छति चेच्छ्रुतिः **'यदिदमुपासते'** इत्यत्र पुनरिदं-शब्दं न वदेत् । पूर्वोक्तेन 'तदेव ब्रह्म त्वं विद्धि नेदम्' इतीदंशब्देनैवाकाङ्क्षापूर्तिसंभवात् । अतोऽस्माभिरुक्त एवान्वयो रमणीयः ।

( ३६ ) किञ्च ब्रह्म नोपास्यमिति स्वीकारे हिरण्मयपुरुषप्रभृतीनि वेदोक्तान्युपास्य-स्वरूपाणि ब्रह्मेति प्रतिपादयन्ति **'अन्तस्तद्धर्मोपदेशात्'** इत्यादीनि व्याससूत्राण्यपि विरुध्यन्ते । इदं च न कथमपि वक्तुं शक्यते 'यदुपास्यानि ब्रह्मेति मत्वोपास्यन्ते चेत् उपासना फलवती भवतीति व्याससूत्रेष्वपि ब्रह्मेत्युच्यन्ते, वस्तुतो न ब्रह्मेति' । यतः **'आत्मेत्येवोपासीत'** इति श्रुतिरात्मत्वेनोपासना कर्तव्येति विधिं दर्शयति । आत्मनि चान्यथाबुद्धिकरणे पापमिति श्रुतिराज्ञापयति । इयं हि श्रुतिः—

**'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चौरेणात्माऽपहारिणा ॥'**

किञ्च वस्तुनो विपरीतज्ञानेन वास्तविकं फलं लब्धुमपि न शक्यते । यथा वायुशामकमौषधमपेक्षमाणो वायुप्रकोपकमौषधं सेवेत चेत्, न कदाचिदपि वायुशान्तिर्भवेत् एवमब्रह्म वस्तु ब्रह्मेति मत्वोपास्येत चेद्, न कदाचिदपि चित्तशुद्धिः क्रममुक्तिर्वा फलं लभ्येत । अतो भगवान् वेदव्यास उपास्यस्वरूपेषूपासनार्थं ब्रह्मबुद्धिं न विधत्ते, किन्तु वस्तुत एवोपास्यस्वरूपाणि ब्रह्मेति कथयति सूत्रैरित्येव स्वीकर्तुमुचितम् ।

## अवतारा मायाकल्पिता ब्रह्म-स्वरूपा वा ? ।

**पूर्वपक्षी**—वाराहपुराणे भगवता वराहदेवेन पृथिवीकृतानां प्रश्नानां प्रत्युत्तरं ददतेदमुक्तम्—

'मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥
इत्येताः कथितास्तस्य मूर्तयो भूतधारिणि ।
दर्शनं प्राप्तुमिच्छूनां सोपानानि च शोभने ॥

अत्र 'सोपान'–शब्देन दशावताराः परब्रह्मदर्शसाधनानीत्युक्तमस्ति । साधनानि चावश्यं साध्यतो भिद्यन्ते । अतोऽवताराः परब्रह्मणो भिन्ना इत्येतेन प्रमाणीकृतं भवति । अत एवैते अविद्याकल्पिता इति स्वीक्रियते, यतः **'एकमेवाद्वितीयम्'** इत्याद्याभिरभेदवादिनीभिः श्रुतिभिर्ब्रह्मभिन्नं न किञ्चिदपि वास्तविकमिति प्रमाणीक्रियते, अवास्तविकं चाविद्याकल्पितमेव भवितुमर्हति ।

यद्यप्येते अवतारा अविद्याकल्पितास्तथापि एतान् ब्रह्मेति मत्वा नाना जना उपासते । यथोपासनं यथासङ्कल्पं चाविद्यकानि नश्वरफलान्यपि तानि तानि लभन्त इति शिष्टानां नाविदितचरम् । अतो यथैतेषामाविद्यकानामवताराणामुपासनया फलं लभ्यते, एवमाविद्यकानां वेदोक्तानां हिरण्मयपुरुषप्रभृतीनामुपासनयाऽपि फलं लभ्यत इति नैतदर्थं हिरण्मयपुरुषप्रभृतीन्युपास्यस्वरूपाणि वस्तुतो ब्रह्मस्वरूपाणीति स्वीकरणमावश्यकम् । अतएवोपास्यपरिचायकानां सर्वेषामपि व्याससूत्राणां ब्रह्मबुद्धिविधानमेवाभिप्रेतमिति निर्विवादं सिद्ध्यति ।

**सिद्धान्ती**—उपदेशदर्शनदुष्टहननादिभिः कार्यैः प्रवृत्तिनिवृत्तिलक्षणस्य धर्मस्य स्थापनाऽभिवृद्धिश्चैतैरवतारैः क्रियते । निवृत्तिलक्षणेन धर्मेण च परब्रह्मप्राप्तिर्भवति । अत एते परब्रह्मप्राप्तौ साधनानीत्युदाहृतवचने 'सोपान'शब्देन बोध्यन्ते । वस्तुतः, परब्रह्मणो भिन्ना अविद्याकल्पिताश्चैते इति 'सोपान'शब्देन प्रमाणीकर्तुं न शक्यते, यतः **'इत्येताः कथितास्तस्य मूर्तयो भूतधारिणि'** इत्यंशेनैते अवतारा ब्रह्मणो मूर्तय इत्युक्तमस्ति । यद्याविद्यकाश्चेद् 'अविद्यामूर्तय' इति वदेत् । अत उदाहृतवचनबलेनैते अवतारा आविद्यका इति न कथमपि वक्तुं शक्यते ।

यच्च 'सोपान' शब्देनैषामवताराणां परब्रह्मापेक्षया गौणत्वं व्यक्तीक्रियते, तत्तु नानुचितम्, यतः एते अंशावताराः सन्ति । एषु यः कृष्णः सोऽप्यंशावतार एव, योऽस्माभिः पूर्णं ब्रह्मेत्युच्यते स गीतावक्ता श्रीकृष्णो नास्ति, यतो गीतायां स्वयं तेन 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम्' इति वचनेन 'स्वात्मा सर्वेश्वर आनन्दमय' इत्युक्तमस्ति, अन्यथा जानानाश्च मूढा इत्युक्त्वा निन्दिताः सन्ति । अतो गीतावक्ता श्रीकृष्णः परं ब्रह्मैव ।

यथा चैते अवताराः परब्रह्मस्वरूपाः सन्ति, तथा व्याससूत्रोक्ता हिरण्मयपुरुषप्रभृतय उपास्या अपि ब्रह्मैव, न त्वाविद्यकाः। अत एवोपासनाऽपि फलवती भवति।

(३४) किञ्च न सर्वत्रोपास्यस्वरूपेष्वाविद्यककल्पनाऽपि संभवति। तथा हि—एकादशस्कन्धे भागवते 'कृते शुक्लश्चतुर्बाहुः' इत्यादिवचनैश्चतुर्युगेषु पृथक् २ उपास्यस्वरूपाणि प्रदर्शितानि सन्ति। पञ्चमस्कन्धे च भारतवर्षकिम्पुरुषवर्षप्रभृतिषु पृथिवीखण्डेषु नरनारायणादीनि पृथक् २ उपास्यस्वरूपाण्युपदिष्टानि सन्ति। यद्येतान्युपास्यस्वरूपाण्यविद्यया प्रत्यायितानि चेत्, शुक्लभगवान् सत्ययुग एवोपास्यते, नान्ययुगेषु, नरनारायणौ च भारतवर्ष एवाराध्येते, नान्येषु किम्पुरुषप्रभृतिषु वर्षेष्विति नियमो न सर्वथा संभवति, यतोऽविद्या सर्वत्र देशे काले च भ्रमप्रतीतिं कारयितुं क्षमते। न हि शुक्तिरजतप्रतीतौ कश्चनैवंविधो नियमो निरीक्षितो यदमुकदेशे, अमुकदिने अमुकमुहूर्ते च शुक्तिरजतस्य प्रतीतिर्भवितुमर्हति, नान्यत्र। किञ्चोपास्यस्वरूपपार्थक्यकल्पनायां कालस्याविद्याया वा स्वभावः कारणमित्यपि वक्तुं न शक्यते, यतः कालोऽप्याविद्यकभ्रमेण प्रतीयत इति यथैषामुपास्यस्वरूपाणां नियमो न सम्भवति, तथा कालस्यापि न सम्भवति। अविद्या च मिथ्येति तत्स्वभावेनाप्येवंविधेनैव भवितव्यम्, स किं पार्थक्यं कल्पयिष्यति, यतः कार्यं (कल्प्यं वस्तु) मिथ्या भवितुमर्हति, परन्तु न कारणम् (कल्पकम्)। किञ्चाविद्याया ईदृशकल्पनाकरणनिपुणः स्वभावोऽस्तीत्यत्रापि किञ्चन प्रमाणं नास्ति। अत उपास्यस्वरूपाण्यविद्याकल्पितानीति न कथयितुं शक्यते।

## ब्रह्मणः सावयवता।

(३२) **पूर्वपक्षी**—सर्वत्रोपनिषत्सु उपास्यस्वरूपाणां करचरणादयोऽवयवा वर्ण्यन्ते। 'न तस्य कार्यं करणं चे'ति श्रुतिश्च कार्यकरणशब्दाभ्यां ब्रह्मणो देहेन्द्रियाणि निषेधति। अत उपास्यस्वरूपाणि ब्रह्मेति न वक्तुं शक्यते।

**सिद्धान्ती**—'न तस्य कार्यं करणं चे'ति श्रुतिर्ब्रह्मणो देहेन्द्रियाणि न निषेधति, किन्तु यथा जीवस्य जन्यानि (कार्याणि) स्वभिन्नानि च देहेन्द्रियाणि, तथा ब्रह्मणो देहेन्द्रियाणि न सन्ति, अर्थात्—नित्यानि स्वाभिन्नानि च सन्तीत्येव वदति, यतोऽस्याः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति पश्चिमार्द्धे ज्ञानबलक्रियाप्रभृतिशक्तीनां ब्रह्मणि स्वाभाविकी स्थितिरिति निरूपितमस्ति। इदं च न सर्वथा निरवयवे निर्विशेषे ब्रह्मणि संभवति।

**पूर्वपक्षी**—'परास्य शक्ति'रिति पश्चिमांशः 'स्वाभाविकी'शब्देन क्रियाया नित्यतां वक्ति। इयं नित्या क्रिया च मायोपाधिसम्बन्धमहिम्ना ब्रह्मणि प्रतीयते। अतः काश्चन

श्रुतयोऽपि ब्रह्म सक्रियमिति वदन्ति, परन्तु वस्तुतो ब्रह्म निष्क्रियमस्तीति 'न तस्य कार्य'मिति श्रुत्यंशो ब्रह्मणि क्रियासामान्यं निषेधति ।

**सिद्धान्ती**—'पराऽस्य शक्ति'रिति श्रुत्यंशे 'स्वाभाविकी' शब्दः क्रियानित्यतां वक्तीति कथनं न कस्यापि श्रद्धेयं भवितुमर्हति, यतः 'स्वरूपं च स्वभावश्च' इति कोषानुसारेण 'स्वाभाविकी'–शब्दस्य स्वरूपात्मिकेत्येवार्थो वक्तुं शक्यते, न तु नित्येति । जलस्य शीतलता स्वाभाविकीत्यादिषु लौकिकवाक्येषु स्वाभाविकी–शब्दः स्वरूपात्मिकेत्यर्थे प्रयुज्यत इत्यपरोक्षमेव विदुषाम् । अत एव ज्ञानबले ब्रह्मणि मायोपाधिसम्बन्धमहिम्ना प्रतीयेते इत्यपि वक्तुमशक्यम्, यत एताभ्यां सम्बध्यमानः 'स्वाभाविकी'–शब्दः स्वरूपभूते एते ब्रह्मण इति प्रमाणीकरोति ।

किञ्च 'न तत्समश्च' इति श्रुत्यंशोऽपि ब्रह्मसमानं न किञ्चिदन्यदस्तीति कथनेन ब्रह्म स्वाभिन्नदेहेन्द्रियमस्तीति निश्चाययत्येव, यतो जीवाः स्वदेहेन्द्रियेभ्यो भिन्नाः सन्ति, अत एतेषां सादृश्यस्पर्शोऽनेन श्रुत्यंशेन ब्रह्मणि निषिध्यते ।

इत्थं च 'न तस्य कार्यं करणं चे'ति श्रुत्या ब्रह्म स्वाभिन्ननित्यदेहेन्द्रियशालीति निःसंशयं सिध्यतीति न मनागपि देहेन्द्रियनिषेधगन्धः ।

किञ्च ब्रह्मणि क्रियादेहेन्द्रियस्वीकारः प्रमाणान्तरेणाप्यनुगृह्यते, तथाहि–

**सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥**

अर्थः–ब्रह्मणः स्वरूपे सर्वत्र करचरणमुखनयननासिकाकर्णादीन्यवयवेन्द्रियाणि सन्ति । ईदृग् ब्रह्मस्वरूपं सर्वमावृत्य तिष्ठति ।

ब्रह्म कर्तृ इति तु भवन्मतेऽपि संपूर्णेनेक्षत्यधिकरणेन सिध्यति । 'सोपाधिकं च न कर्तृ' इति नानाप्रमाणैर्निपुणं निरूपितं पूर्वम् । अतः शुद्धं ब्रह्म कर्तृ इत्यकामेनापि मञ्जूरीकरणीयम् ।

## ब्रह्मस्वरूपस्य व्यवहरणीयता तत्कारणानि च ।

(३८) **पूर्वपक्षी**—रामकृष्णादय उपास्याः स्वावतारसमये सर्वेषामपि दृशोर्विषया आसन्, ये अभक्तास्तेषामपि । अत एते ब्रह्मस्वरूपा इति न स्वीकर्तुं शक्यते, यतः 'अपि संराधने' इति सूत्रं पुरस्कृत्य ब्रह्मणो दर्शनमाराधनया भवति, नान्यथेति पूर्वमुक्तवान् भवान् । कश्चनाराधनया दर्शनं लभते, कश्चन विनैवैनामिति च न वक्तुं शक्यते, यतो ब्रह्म नित्यनिवृत्तनिखिलरागद्वेषादिदोषमिति दर्शनदाने नेदृशीं विषमतां विधातुं क्षमते ।

किञ्च रामकृष्णादय उपास्या ब्रह्मैव चेत्, **'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'** इति श्रुतिभणितानि हृदयग्रन्थिभेदादीनि ब्रह्मदर्शनफलानि सर्वे रामकृष्णादिदर्शकाः कुतो न लेभिरे। प्रत्युत पुराणेषु तु एतैः सह नाना देवदानवा द्विषन्तो युद्ध्यमानाश्चासन्निति श्रूयते। एषां ब्रह्मत्वे तु रागद्वेषादिदोषप्रणाशपूर्वकः कैवल्यलाभ एव भवेद्दर्शकानाम्। अतो रामकृष्णादय उपास्या न ब्रह्म, किन्त्वविद्याकल्पिता इति स्वीकरणमेव रमणीयम्।

**सिद्धान्ती**—ब्रह्मणो दर्शने भक्तिस्तदिच्छा चेति द्वयं हेतुः। 'अपि संराधने' 'भक्त्या त्वनन्यया' इत्यादीनि वचनानि भक्तिर्दर्शनहेतुरिति वदन्ति, 'मनीषितानुभावोऽयम्' इति वचनं च ब्रह्मण इच्छा दर्शने कारणमिति वक्ति। एतयैवेच्छयाऽवतारसमये रामकृष्णादयः सर्वस्यापि लोचनगोचरीभवन्ति, परन्तु भक्तानां तु तदानीमपि भक्त्यैव, यत एषामेव प्रेमपरवशः सन् प्रादुर्भवति भगवान् लोके। यच्चावतारसमयेऽभक्ता अपि भगवत्स्वरूपमवलोकन्ते तत्र भक्ता अपि हेतवः, यतोऽत्र लोके सर्वेषां समक्षं भक्तान् दर्शनेनानन्दयितुमिच्छन्नवतरति भगवान्। केवलं दर्शनदानं त्ववतारतिरोधानदशायामपि क्वचनाविर्भूय क्रियत एवेत्येवं दर्शनदानेऽयमुक्तहेतुरेव वक्तुं शक्यो, नान्यः।

यच्चावतारसमये सर्वेषां लोचनगोचरोऽपि सन् भगवान् दर्शनफलं भक्तेभ्य एव वितरति, नान्येभ्यः, तत्रापि तदिच्छैव हेतुः। इदञ्च जडजङ्गमात्मकं सर्वमपि जगद्भगवत्स्वरूपमस्तीति दर्शने दर्शनफले वा भेदे सत्यपि विषमता न भगवन्तं स्पृशति, यतो विषमता भेदैकवृत्तिरिति तदभावे न स्वरूपं लभते।

किञ्च प्रपञ्चरचना परमात्मना लीलार्थं कृतास्ति, अतो यथा लीलाया बाधो न भवेत्तथा चरित्राणि प्रकाशयति भगवान्। यद्यलौकिकं स्वरूपं परिचाययेद्भगवान्, सर्वेषां दर्शकानां मोक्षसंपत्त्या प्रपञ्चोच्छेदे लीला बाध्येत। अत एव भगवतः कदाचन यल्लौकिकलीलाऽनुसरणं तदप्युपपद्यते, यत एवंविधलीलया दर्शनं कुर्वतां भगवति प्राकृतत्वबुद्धिरुत्पद्यते। तथा च हृदयग्रन्थिभेदादिदर्शनफललाभो विघ्नितो भवति। अत एतेन रामकृष्णादय उपास्या आविद्यका अब्रह्म वेति न वक्तुं शक्यते।

(३५) **पूर्वपक्षी**—ब्रह्म सदैकरसमस्ति—नैतस्य स्वरूपे कदाचिदपि स्वल्पमप्यन्तरं भवतीति—शास्त्रैरसकृदुच्यते। पूर्वोक्ता रामकृष्णादयोऽवताराः, सूत्रोक्ता हिरण्मयपुरुषप्रभृतयश्च सर्वथाऽनेन विरुध्यन्ते। यतोऽवतारेषु नरसूकरकच्छपाद्याकृतयः श्रूयन्ते, सूत्रोक्तेषूपास्यस्वरूपेष्वपि सवित्रन्तर्वर्तिनो हिरण्मयपुरुषस्य यादृशं रूपं, तादृशमक्षिपुरुषस्य नास्ति। यादृशं चाक्षिपुरुषस्य, तादृशं वैश्वानरस्य नास्तीत्येवं परस्परं सर्वेऽपि विलक्षणाः

सन्ति। एकस्यैकरसस्य ब्रह्मण इमान्येवंविधानि नानास्वरूपाणि न वास्तविकानि भवितुमर्हन्ति। अत एतान्याविद्यकानीति स्वीकरणमेव रमणीयम्।

**सिद्धान्ती**—यच्छास्त्रमेकमेकरसमद्वितीयं ब्रह्मेति वदति, तदेव पूर्वोक्ता अवतारा ब्रह्मस्वरूपा इत्यपि वक्ति। सपरिकरस्य ब्रह्मणः स्वरूपं च केवलेन शास्त्रेणैव निर्णीयते। प्रत्यक्षानुमानप्रभृतीनि प्रमाणान्तराणि तु तदीयदिशं लेशतोऽपि न स्पृशन्ति। अतो यथा शास्त्रं वदति, तथा सर्वैरपि स्वीकर्तव्यमेव।

गीतायां स्वयं भगवता **'सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्' 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्'** इत्यादिभिर्वचनैर्ब्रह्मणः स्वरूपे सर्वत्र करचणादीनीन्द्रियाणि परिच्छेदाश्च सन्ति, तथा सर्वेन्द्रियस्वरूपेण तद्ग्राह्यगुणस्वरूपेण च ब्रह्मैव परिणतं भवतीत्युक्तमस्ति। अत एषामनुरोधेनावतारा ब्रह्मस्वरूपा इति स्वीकरणमावश्यकमेव।

**पूर्वपक्षी**—'सर्वेन्द्रियगुणाभासम्' इति पदेन यद्यपि ब्रह्मणि सर्वेन्द्रियाणां सत्ता स्वीकृताऽस्ति, परन्तु 'सर्वेन्द्रियविवर्जितम्' इति पदेन पुनः सर्वेन्द्रियाणि तत्र निषिध्यन्ते। यदीन्द्रियसत्ता वास्तविकी भवेदत्र पूर्वापरविरोधः स्यात्। एवं 'सर्वतःपाणिपादान्तम्' इति पदेनोक्तः परिच्छेदो वास्तविक इति मन्यते चेत् **'आकाशवत्सर्वगतश्च नित्यः'** इत्याद्या ब्रह्म व्यापकमिति वदन्त्यः श्रुतयो विरुध्यन्ते। किञ्च लोके नास्ति कश्चनैवंविधो दृष्टान्तो येनैकस्मिन्नेव ब्रह्मणि परस्परविरोधिनो नाना धर्माः समावेष्टुं शक्नुवन्तीति सिद्धान्तस्य समर्थनं भवेत्। अतोऽस्य विरोधस्य परिहारायेन्द्रियपरिच्छेदादयो विशेषा मायिका इत्यकामेनापि मन्तव्यमेव। किञ्च 'सर्वेन्द्रियगुणाभासम्' इत्याभासशब्दोऽपि ब्रह्मणः स्वरूपे गुणानामिन्द्रियाणां चाभासमात्रं, न तु वस्तुतस्ते सन्तीत्याशयं प्रकाशयन् मायिकतामेवोक्तविशेषाणां समर्थयते।

**सिद्धान्ती**—'सर्वेन्द्रियविवर्जितम्' इति पदेन ब्रह्मणि सर्वेन्द्रियाणि न निषिद्ध्यन्ते, किन्तु जीववद्ब्रह्मणः स्वभिन्नानि प्राकृतेन्द्रियाणि न सन्तीत्येव बोध्यते।

यच्च 'सर्वेन्द्रियगुणाभास'मित्यस्य, ब्रह्मणि सर्वेन्द्रियगुणानामाभासमात्रं, न तु ते वस्तुतस्तत्र सन्तीत्यर्थकथनं, तत्तु सर्वथाऽसङ्गतमेव। यत एतेन ब्रह्मणोऽलौकिकेन्द्रियवाचीनि 'सर्वतःपाणिपादान्तम्' इत्यादीनि वचनानि विरुध्यन्ते। अतः सर्वेन्द्रियरूपेण तद्ग्राह्यगुणरूपेण च स्वयं ब्रह्मैव परिणतमिति मदुक्तोऽर्थ एव श्रेयान्।

यद्यपि व्यापकत्वपरिच्छेदप्रभृतयो धर्मा लोकदृष्ट्या परस्परं विरुद्धाः प्रतीयन्ते, परन्तु ब्रह्मणः स्वरूपमेवंविधं विलक्षणमस्ति, यत्र परस्परविरुद्धाः सर्वेऽपि धर्माः समाविशन्ति, न केऽपि विरुद्ध्यन्ते। अत एव श्रीभागवते दामोदरलीलानिरूपणप्रसङ्गे श्रीकृष्णस्वरूपं

वर्णयद्भिः श्रीशुकाचार्यैः **'न चान्तर्न बहिर्यस्य' 'गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा'** इत्यादिवचननिचयेन, यज्जगतो बहिरन्तः पूर्वापरं सर्वत्र सर्वदा विद्यते तदेवंविधमव्यक्तमिन्द्रियदूरचरं ब्रह्म ( कृष्णाख्यं ) गोपगृहिणी दाम्नोलूखलतले बबन्धेत्युक्तम् । यदि श्रीकृष्णस्य लघीयसि शैशवस्वरूपे व्यापकता ब्रह्मता च न चेद्, इदं स्वरूपं प्रपञ्चस्यान्तर्बहिर्वर्तमानमव्यक्तमिन्द्रियागोचरं चेति नोच्येत । किञ्चेतः पश्चादपि **'द्व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिके'**ति वचनं पुनः पुनरनेकरज्जूनां सन्धाने कृतेऽपि बन्धनरज्जुर्द्व्यङ्गुलन्यूनतां न तत्याजेत्युक्त्या लघीयसोऽपि श्रीकृष्णस्वरूपस्य व्यापकतां प्रमाणीकरोत्येव । अतो ब्रह्मणि व्यापकतापरिच्छेदप्रभृतीनां धर्माणां सहानवस्थितिलक्षणविरोधाभिधानं विवेकवैकल्यमूलकमेव ।

**पूर्वपक्षी**—'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्' इति वचने यथा प्राकृतानां करचरणादीन्द्रियाणां निषेधोऽप्राकृतानां च विधानमिति भवद्भिरङ्गीक्रियते, तथैवंविधेषु परस्परविरोधिषु सर्वेषु श्रुति–स्मृतिवचनेषु प्राकृतानां निषेधोऽप्राकृतानां च विधानमिति कल्पनाऽवश्यं स्वीकरिष्यत एव । एवं चायं व्यर्थो विस्तरः स्वीकृतः स्यात् । तथापि कथंचिदियं स्वीक्रियेत, परन्तु स्वीकृतावेतस्याः किमपि समुचितं प्रमाणं नास्ति । अत एतत्कल्पनाऽपेक्षया तु पूर्वमुपन्यस्तेन 'उपजीव्यत्वतः' इति कारिकाकथितेन न्यायेन धर्मनिषेधिकासु श्रुतिषु सर्वेषां धर्माणां निषेधं मञ्जूरीकृत्य श्रीकृष्णादीनि सधर्मकस्वरूपाणि मायिकानीत्येव मन्तुमुचितम् । यच्च दामोदरलीलामृत्स्नाभक्षणलीलादौ लघीयसोऽपि श्रीकृष्णस्वरूपस्य व्यापकत्वं सर्वजगदाधारत्वं च वर्ण्यते, तत्तु केवलं मायिकवैचित्र्यप्रपञ्चनमिति नानेन ब्रह्म विरुद्धधर्माणामधिकरणमिति सिद्ध्यति ।

**सिद्धान्ती**—**'प्रकृतैतावत्त्वं प्रतिषेधति'** इति व्याससूत्रं प्रमाणतया प्रदर्श्य श्रुतिषु प्राकृतधर्माणां निषेधोऽप्राकृतानां च विधानमिति सप्रपञ्चमुपपादितं पूर्वम् । किञ्च **'तदरूपमनामयम्'** इति श्रुतिः 'अरूप'मितिपदेन ब्रह्मणो रूपं निषिद्ध्य 'अनामय'मिति पदेनामयमपि प्रतिषेधति । आमयश्च ( रोगश्च ) प्राकृतरूप एव वर्तमानो विलोक्यते सर्वत्र, अत एतत्साहचर्यमहिम्ना रूपमपीह प्राकृतमेव निषिद्ध्यत इति निश्चीयते । एतत्समानन्यायेनान्यत्रापि प्राकृतधर्माणां निषेधो, न त्वप्राकृतानामिति सिद्ध्यति । किञ्च यद्यप्राकृतानामपि निषेधश्चेद् 'सर्वतःपाणिपादान्त'मिति श्रुत्या यथा ब्रह्म सर्वतःपाणिपादमस्तीत्युच्यते, एवं समानानुपूर्वीमाश्रित्य कयाचन श्रुत्या ब्रह्म सर्वतःपाणिपादं नास्तीति कुतो नोक्तम् । इत्थमेव सर्वकामत्वसर्वगन्धत्वसर्वज्ञत्वप्रभृतिधर्माणामपि विधानानुपूर्व्या निषेध आवश्यकः, परन्तु नैवंविधो निषेधः कुत्राप्युपलभ्यते । अतः सर्वत्र वचनेषु प्राकृतधर्माणां निषेधोऽस्तीति मन्तव्यमेव ।

किञ्च लौकिकधर्मवद्ब्रह्मणो धर्मा न ततो विभिन्नाः सन्ति। अत एतान्निरूपयन्त्यः श्रुतयः साक्षाद्ब्रह्मनिरूपणपरा इत्यवश्यमङ्गीकरणीयमेव। इत्थं चोपजीव्योपजीवकभावकल्पनाऽसम्भवेन 'उपजीव्यत्वतः' इति कारिकोक्तो न्यायो नेहोपयोक्तुं शक्यते।

(३५–३९) किञ्चेदमपि कथनमबोधनिबन्धनमेवास्ति यच्छ्रीकृष्णस्य मृत्स्नाभक्षणाद्या लीलाः केवलं मायामहिम्नैव प्रतीयन्ते स्म, वस्तुतोऽवस्तुभूतास्ता इति। यतो हि मृत्स्नाभक्षणलीलावसरे स्वयं यशोदया 'बत बुद्धिमोहः' 'उत देवमाया' इत्यादिपदैर्मोहदेवमायादिदोषोदिता असतीः प्रतीतीराशङ्क्या पूर्वं प्रदर्श्य पश्चाद् **'अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः'** इति वचनेन मद्बालकस्यैव किञ्चिदेवंविधं स्वतःसिद्धं सामर्थ्यमस्ति, यत्प्रभाववैभवेनाहमेतस्य लघुन्यपि वदनारविन्दे सर्वं विश्वमवलोकयामीत्युक्तमस्ति। अत इतो विरुद्धा मायिकता नितरामशक्यवचना वर्तते।

(४०) किञ्च युष्माकमभिमता माया जडतया स्वयमेवंविधानि वैचित्र्याणि दर्शयितुं न शक्नोति। यदि मायासहायः परमात्मा प्रदर्शयेच्चेत्, सोऽनीश्वर एव स्यात्, यत ईश्वरः स्वयं सर्वकार्याणि कर्तुं समर्थोऽस्ति, न कमपि सहायं साधनं वाऽपेक्षते।

नापि श्रीकृष्णः स्वसामर्थ्येनैन्द्रजालिकवदसदेव दर्शितवानिति वक्तुं शक्यते, यतः असद्वस्तु स एव दर्शयति, यः सद्वस्तुप्रदर्शनेऽसमर्थः स्यात्, श्रीकृष्णस्तु सर्वसमर्थः सर्वेश्वरः, स कथमसद्वस्तु प्रदर्शयेत्। किञ्च कदाचन प्रदर्शयेदपि, परन्त्वासुरजीवेभ्यो, येषां ज्ञानं मोहेनावरीतुं वाञ्छति, न तु यशोदासदृशेभ्यः परमप्रियेभ्यः। अतो मृत्स्नाभक्षणलीला दामोदरलीला चासतीति न वक्तुं शक्यते। अत एतदनुरोधेन पूर्वोक्तरीत्या श्रीकृष्णस्वरूपं शुद्धं ब्रह्म विरुद्धधर्माधिकरणं चेति स्वीकरणमावश्यकमेव।

(३५) किञ्चैवंविधविरुद्धधर्माधारताया वर्णनं केवलमत्रैव नास्ति, किन्तु श्रुतिष्वपि विद्यते। श्रीकृष्णेन मृत्स्नाभक्षणावसरे यज्जगति वर्तमानोऽपि स्वात्मा जगदाधार इति प्रमाणीकृतम्, तस्यास्य वर्णनं **'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति'** इति श्रुतिः करोति। दामोदरलीलायां च या परिच्छिन्नस्य स्वरूपस्य 'पूर्वापरं बहिश्चान्तः' इत्यादिभिर्वचनैर्व्यापकता वर्णिता, सेयं **'यस्त्वेतमेव प्रादेशमात्रमभिविमानम्'** इत्यनया श्रुत्या समर्थ्यते।

अस्याः श्रुतेरर्थं निर्णयन् भगवान् वेदव्यासोऽपि **'साक्षादप्यविरोधं जैमिनिः'** इत्यादिभिः सूत्रैर्जैमिन्यादीनां मतानि दर्शयित्वा, पश्चात् **'आमनन्ति चैनमस्मिन्'** इति सूत्रेणेदं निर्णीतवान्—**'य एषोऽनन्तोऽव्यक्त आत्मा'** इति श्रुतावनन्तपदाभिधेयस्य व्यापकस्य परमात्मनः सङ्कुचितस्थानेऽवस्थितिरुक्ताऽस्ति। अतोऽत्रापि प्रादेशमात्रस्य (परिच्छिन्नस्य) अभिविमानत्वं (व्यापकत्वं) न विरुद्ध्यत इत्ययं निरूप्यमाणः परमात्मैव।

एतद्व्यासोक्तनिर्णयानुसारेण 'अपाणिपादो जवनो ग्रहीता' 'तदेजति तन्नैजति' इत्याद्यास्वितरश्रुतिष्वपि विरुद्धधर्माणां वर्णनं यथार्थमित्यवश्यमङ्गीकरणीयमेव ।

( ३६—३९ ) किञ्च दृष्टान्ताभावेन ब्रह्म विरुद्धधर्माणामधिकरणमिति न सिद्ध्यतीति कथनमपि केवलं बालिशबिभीषिकैव, यतो गृहान्निर्गत्य प्राङ्गणं प्रविशति पुरुषे निष्क्रमणत्वप्रवेशत्वे परस्परविरुद्धे अपि समानसमये अनुभूयेते एव। किञ्च शब्दैकबोध्येऽलौकिकवस्तुनि निर्णये दृष्टान्ताभावोऽपि न बाधको भवितुं प्रभुः। किञ्च युष्माकं निर्विशेषब्रह्माङ्गीकारेऽपि न कश्चिदपि लौकिकदृष्टान्तोऽस्ति। सत्तासमवायादयो ये ये भवद्भिरभिमतसिद्धये प्रदर्श्यन्ते, तेषु सर्वेष्वपि कालाधारत्वसखण्डोपाधिप्रभृतिधर्माणामन्यतमस्य कस्यचन सम्बन्धस्तु वर्तत एव । अतो विनैव दृष्टान्तं यथा युष्माकं मते ब्रह्म निर्विशेषमिति सिद्ध्यति, एवमस्माकं मते ब्रह्म विरुद्धधर्माणामधिकरणमित्यपि सेत्स्यति ।

**पूर्वपक्षी**—ब्रह्मणो विरुद्धधर्माधिकरणतां प्रमाणीकर्तुं यः पुरुषदृष्टान्तः पूर्वं प्रदर्शितः, स सर्वथाऽसङ्गत एव। यत उक्तनिर्गमप्रवेशौ न स्वतन्त्रं क्रियाद्वयं, किन्त्वेकस्यामेव क्रियायां व्यवहरन्तः स्वबुद्धिविभेदेन प्रवेशनिष्क्रमणप्रभृतीन् भिन्नभिन्नान् शब्दान् प्रयुञ्जत इति नेह विरुद्धयोः समावेशोऽस्ति ।

**सिद्धान्ती**—पूर्वोक्तः पुरुषदृष्टान्तस्तु न कथमप्यसङ्गतः, यत एकस्यामेव पुरुषक्रियायां निष्क्रमणत्वप्रवेशत्वेतिपरस्परविरुद्धधर्मद्वयस्य समावेशोऽशेषेणापि जनेनानुभूयत एव। 'निष्क्रामति' 'प्रविशति' इत्याद्या भिन्नभिन्नाश्च शब्दा लोके तद्बोधायोपयुज्यन्ते । यदीदं धर्मद्वयं परस्परं भिन्नं न चेत्, प्रत्येकस्य बोधाय पर्यायेण 'निष्क्रामति' 'प्रविशति' इति द्वयोरपि प्रयोगः स्यात् ।

किञ्च लौकिकपरीक्षका इदं धर्मद्वयं भ्रमेण भिन्नं मन्यन्त इत्यपि न केनचन श्रद्धातुं शक्यते, यत उत्तरत्र समये यो बोधो बाध्यते, स एव भ्रम इति सर्वसंमतो नियमः । न चोक्तबुद्धेः कदाचिदपि बाधो दृष्टचरः । अत उपर्युक्तधर्मद्वयस्यापेक्षिकत्वेऽपि, यथा परत्वापरत्वे भिन्ने स्वीक्रियेते, तथेदमपि परस्परं भिन्नमिति मन्तुमुचितमेव । अतो ब्रह्मणो विरुद्धधर्माधारतायाः समर्थनायाऽस्य दृष्टान्ततयोपन्यासो युक्त एव। किञ्च नात्रार्थे दृष्टान्तोऽपेक्ष्यत इत्यपि पूर्वमुपपादितम् । अतो ब्रह्मणो विरुद्धधर्माधिकरणतायां तु केवलं प्रमाणैरेव सन्तुष्यताम् ।

( ३८ ) किञ्च न केवलं दामोदरलीलादिषु पूर्वोक्तप्रसङ्गेष्वेव, किन्तु रासलीलावसरेऽपि 'आत्मारामोऽप्यरीरमत्' इत्यादिभिः कतिपयवचनैर्भगवता शुकाचार्येण परब्रह्मणः श्रीकृष्णस्य विरुद्धधर्माधिकरणता वर्ण्यते । भगवच्चरणपरमप्रणयिना प्रामाणिकमूर्द्धमणिना जय-

देवकविनाऽपि गीतगोविन्दे **'तन्न वेद्मि कुतो गतासि'** इति लीलावर्णनावसरेऽज्ञतानाटनमुपन्यस्य सर्वज्ञस्य श्रीकृष्णस्य विरुद्धधर्माधिकरणता प्रमाणीकृताऽस्ति। एवमन्येऽपि नानाश्रुतिस्मृतिपुराणभक्तानुभवा भगवतो विरुद्धधर्माधिकरणतामुदारादरेण वदन्ति । अतो नैतस्याः स्वीकरणं कस्यापि वैमनस्यावहं भवितुमर्हति । किञ्च **इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'** इति प्रमाणं पुराणानि वेदविवरणरूपाणि सन्ति, वेदोक्ताः सन्दिग्धविषया एतैः स्पष्टीक्रियन्त इति वदति । अतः श्रीमद्भागवतोक्तेऽर्थे न कथमपि संशयोदयो लब्धावसरो भवितुमर्हति ।

## लीलायाः स्वरूपम् ।

(४१) **पूर्वपक्षी**—श्रीमद्भागवते गीयमाना रासादिलीला हि केवलकाममूला विलासाः सन्ति। श्रीकृष्णश्च युष्माभिर्निरवधिनिरुपधिनिर्बाधविशुद्धबोधं परिपूर्णं परमानन्दस्वरूपं परं ब्रह्मेत्युच्यते। अतो न ते विलासा वस्तुत एतत्कृता भवितुमर्हन्ति, यत एवंविधं ज्ञानैकघनं परमानन्दमयं ब्रह्म स्वेनानन्देन सदा तृप्तमस्ति, विवेकविकलकामुकलोकाभिमतामीदृशीं लीलां न कर्तुमर्हति, नापि 'तन्न वेद्मि कुतो गताऽसि' इत्यादिवचनैर्निजानभिज्ञतां वक्तुमर्हति । किञ्चैतल्लीलाङ्गभूताः प्रियावियोगवेलायां जायमानाः सन्तापविलापप्रलापप्रभृतयो वाङ्मनसविकारा अपि न परमानन्दमये ब्रह्मणि संभवन्ति । अत इमा लीलाः केवलमनुकरणमात्रं, न वास्तविक्य इति नैतत्प्रसङ्गगतानि वचनानि ब्रह्मणो विरुद्धधर्माधिकरणतां प्रमाणीकर्तुं प्रभवन्ति ।

**सिद्धान्ती**—रासादिलीलानां वास्तविकतास्वीकारेण परब्रह्मणः श्रीकृष्णस्य ज्ञानैकघनता परमानन्दमयता च न दूषिता भवति, यतो ब्रह्मणि परस्परविरोधिनः सर्वे धर्माः समावेष्टुं क्षमन्ते, न केऽपि विरुध्यन्ते, अत इमा लीलाः केवलमनुकरणमिति स्वीकारो नावश्यकः ।

किञ्च **'सर्वकामः सर्वगन्धः सर्वरसः' 'रसो वै सः'** इत्याद्याः श्रुतयो निखिललौकिकरसानां मूलरसस्तदधिकरणं च ब्रह्मेति वदन्ति । रसेषु च सर्वेषु शृङ्गार एवाग्रणीर्गण्यते रसविद्भिः। अतो ब्रह्म स्वयं शृङ्गारस्वरूपं तदधिकरणं चेत्यकामेनाप्यङ्गीकरणीयमेव । रसशास्त्रस्य चेयं मर्यादा—यन्नायको नायिका चालम्बनविभावः, चन्द्रचन्दनादय उद्दीपनविभावाः, स्वरभङ्गस्तम्भकम्पप्रभृतयोऽनुभावाः, मोहमददैन्यनिर्वेदादयः सञ्चारिभावाश्चेति सर्वे यदा समुदिता भवन्ति, तदा रसो व्यक्तीभवति । अतः श्रुतिभिरुच्यमानाया ब्रह्मणः शृङ्गाररसाधारताया निर्वाहायोक्तानामनुभावसञ्चारिभावानां ब्रह्मण्यवस्थितिरवश्यं सर्वैरपि स्वीकरणीया भवत्येव । युष्माभिश्च ये सन्तापविलापप्रभृतयो विरहक्लेशाः प्रदर्शितास्ते सर्वेऽपि यथासम्भवमुपर्युक्तेष्वनुभावसञ्चारिभावेष्वन्तर्भवन्तीति तेषामधिकरणं ब्रह्मेत्यपि स्वीकृतिरवश्यमवश्यपरिहार्यैव वर्तते ।

## ब्रह्मात्मकस्य रसस्य स्वरूपम् ।

**पूर्वपक्षी**—वेदे यत्र यत्र ब्रह्मणो बोधाय 'रस'-शब्दः प्रयुज्यते, तत्र सर्वत्रापि 'रस'-शब्दस्यानन्द एवार्थः, यतस्तैत्तिरीयोपनिषदि प्रथमं **'रसो वै सः'** इति श्रुत्या **रसो** ब्रह्मेति कथयित्वा, पश्चात् **'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति'** इति श्रुत्या 'रस'-शब्दस्यानन्दोऽर्थं इत्युक्तमस्ति । अतो विभावानुभावव्यभिचारिसंयोगतः समुत्पन्नस्य लौकिकरसस्य सादृश्यमीदृशरसाधारता वा ब्रह्मणि न स्वीकर्तुं शक्यते ।

किञ्चैवं सत्यपि ब्रह्मणः कथञ्चनोक्तविधता स्वीक्रियेत, परन्तु रसः प्रच्छन्नः सर्वदा हृदय एवावतिष्ठते, परब्रह्मणः श्रीकृष्णस्य च युष्माभिर्बहिःप्रदेशे चाक्षुषदर्शनं व्यक्तं स्वीक्रियते, अतो 'रस'-शब्दस्योपर्युक्तानुसारेणानन्दोऽर्थ इत्येव मन्तुमुचितम् ।

**सिद्धान्ती**—यद्यपि 'रसो वै सः' इति श्रुतौ 'रस'-शब्दस्यानन्द एवार्थः, परन्त्वितः श्रुतेरनन्तरं पठितासु **'को ह्येवान्यात्कः प्राणाद्यदेष आकाश आनन्दो न स्यात्'** इत्याद्यासु श्रुतिषु सोऽयमानन्दः सर्वेषां प्राणधारणकारणम्, सर्वानानन्दयति, सर्वेषां हृदये वसति, सर्वे आनन्दा अस्यांशाः कार्यस्वरूपाश्चेत्येवं व्याख्यातोऽस्ति । अतः शृङ्गारादिरसस्वरूपेण लौकिकानन्देनायं नितान्तं सदृश इति निश्चीयते, यतो लोकेंऽशांशिनोः कार्यकरणयोश्च सादृश्यं सर्वत्र नेत्रपात्रीकुर्मः । इत्थं च कार्यस्वरूपे अंशस्वरूपे च 'रस'-शब्दवाच्ये लौकिकानन्दे विभावानुभावव्यभिचारिभावा अनुभूयन्त इत्यलौकिकेऽत्र ब्रह्मानन्देऽपि ते स्वीकर्तव्या इति सिद्ध्यति । किञ्चास्य रसस्वरूपस्य परब्रह्मणः श्रीकृष्णस्य दर्शनं यद्यपि भक्तैर्बहिःप्रदेशेऽपि क्रियते, तथापि **'स मानसीन आत्मा जनानाम्'** इति श्रुत्यनुरोधेनायं हृदयस्थ इति मन्तव्यमेव ।

**पूर्वपक्षी**—इदं श्रीकृष्णस्वरूपं यद्येकमेव चेद्, हृदयबाह्यप्रदेशयोरन्यतरत्रैवैककालेऽवस्थातुमर्हति, न तूभयत्र । यदीदं नाना चेद्, यानि स्वरूपाणि हृदये तानि प्रच्छन्नतया रसात्मकानि भवितुमर्हन्ति, न तु बहिर्व्यक्तानि ।

किञ्च श्रीकृष्णस्य रसात्मकत्वे शृङ्गारवीरादिभेदै रसस्यानेकविधताऽस्तीत्यत इयमेकस्यैकरसस्य श्रीकृष्णस्यापि स्वीकरणीया भविष्यतीति **'एकमेवाद्वितीयम्'** इति श्रुतिर्विरोत्स्यते । शृङ्गारादिरसाश्चानित्या इति श्रीकृष्णस्याप्यनित्यताऽऽपत्स्यते । अतः श्रीकृष्णो रसस्वरूप इति न कथमपि मञ्जूरीकर्तुं पार्यते ।

**सिद्धान्ती**—श्रीकृष्णस्य यत्स्वरूपं बहिःप्रदेशे प्रकटं विद्यते, तदेव हृदयान्तर्विद्यते । यतस्तत्स्वरूपस्याभिव्यञ्जिका प्रेमलक्षणा भक्तिर्हृदयधर्मतया हृदये वसति, लोके चाभिव्यञ्जकाभिव्यङ्ग्ययोरेकाधिकरणता सर्वत्रावलोक्यते, अतस्तस्यापि हृदय एवावस्थितिर्युज्यते ।

किञ्च **'अनन्तरूपम्'** इत्याद्याः श्रुतयः श्रीकृष्णस्य नानारूपतां निरूपयन्ति, अत एतदात्मकस्य रसस्यापि शृङ्गारवीरादिभेदैर्नानात्वं समुचितमेव। अनित्यं तु प्रपञ्चेऽपि न किञ्चनास्ति, तत्कुतः प्रपञ्चतः परतमे ब्रह्मणि तत्स्पर्शशङ्कापि। किञ्च ब्रह्म नित्यमिति श्रुतिशिरोविरोचिनानावचोभिरुच्चैरसकृन्निवेद्यत इति तादृशे ब्रह्मणि बोध्यमाना रसात्मकता प्रत्युत रसस्यैव नित्यतां निश्चाययति।

**पूर्वपक्षी**—प्रस्तुते श्रीकृष्णो रसात्मक इति भवत्कथनस्य मुख्यं तात्पर्यं श्रीकृष्णः शृङ्गाररसात्मेति वर्तते। शृङ्गाररसश्च नेत्रप्रीतिप्रभृतिकारणकलापसमुपचितोचितप्रणय-परवशं स्त्रीपुन्द्वन्द्वाभिधमालम्बनविभावं विना न कदाचिदपि व्यक्तिमवस्थितिं वा लभते, अतः श्रीकृष्णः शृङ्गाररसात्मा चेद्, अस्याप्यालम्बनद्वयं निर्दिश्यताम्। किञ्च श्रीकृष्णः शृङ्गाररसात्मा शृङ्गाररसाधिकरणं चेति पूर्वोक्ते विशेषणद्वयेऽपि किमप्येकमेव वास्तविकं भवितुमर्हति, न तूभयम्, यत इदं द्वयं परस्परविरुद्धमस्ति।

**सिद्धान्ती**—शृङ्गारे प्रारम्भतः समाप्तिपर्यन्तमनुरागापरपर्याया रतिरक्षतात्मना संततमवतिष्ठते, अत इयं 'स्थायिभाव'–शब्देनोच्यते। इयं च लोके स्वधर्मिणो भिन्नाऽपि शृङ्गारिणि भगवति तदभिन्नैवास्ति, यतोऽद्वैतश्रुतिनिर्देशेन ब्रह्मधर्मा ब्रह्माभिन्ना एव सर्वैः स्वीक्रियन्ते। किञ्च व्रजसुन्दरीणां भावानुरूपमेव भगवता स्वरूपलीलाद्यानन्ददानं विधीयते। अतोऽपि व्रजसुन्दरीणां भावात्मा भगवानिति निश्चीयते। अयमेव रतिनामा स्थायिभावो विभावानुभावव्यभिचारिसम्बन्धेन जातपरिपोषो 'रस'–शब्दवाच्यो भवति, अतोऽनेन भगवान् शृङ्गाररसात्मेत्यपि सिद्ध्यति। किञ्चालम्बनविभावद्वयं तु यथा लौकिकरसस्य, तथाऽस्यापि वर्तते, भगवान् स्वयं, व्रजसुन्दर्यश्च।

यद्यपि रसो रसवाँश्चेति द्वावपि विभिन्नावेव लोके विलोक्येते, तथापि **'रसो वै सः'** इति श्रुतिर्ब्रह्म रस इति, **'सर्वकामः सर्वगन्धः सर्वरसः'** इति श्रुतिश्च बहुव्रीहिसमासशालिना 'सर्वरसः' इति पदेन ब्रह्म रसवदिति वदति, अतः शृङ्गाररसात्मा तदधिकरणं च श्रीकृष्ण इति स्वीकरणं नारमणीयम्।

अत्रेदमवधेयम्–रसशास्त्रनिदेशानुसारेण या सामग्री लौकिकरसाविर्भावे सर्वत्रापेक्ष्यते, सा सर्वाऽप्येतस्यालौकिकस्य ब्रह्मात्मकरसस्याविर्भावेऽप्यस्ति, यतः सामग्र्या परिपुष्ट एव रत्याख्यस्थायिभावो 'रस'-शब्दवाच्यो भवति, नान्यथा।

इत्थं 'रसो वै सः' इत्यादिश्रुतिवचनबलेन भगवतो रसरूपता निरूपिता, अथ पुनः प्रकारान्तरेणापि सेयं निरूप्यते। तथाहि–**'अहं भक्तपराधीनः'** इत्यादिवचनजातेन दुर्वाससः पुरः **'सत्स्त्रियः सत्पतिं यथे'**ति दृष्टान्तप्रदर्शनपुरःसरमात्मानं भक्तपरतन्त्रमुक्तवान् भगवान्, एतेनापि भगवान् रसस्वरूप इति निश्चीयते, यतः **'स्त्रियो वा पुरुषो वापि**

भर्तृभावेन केशवम्' इति बृहद्वामनपुराणवचनं 'भगवान् मे भर्ते'ति भावेन भक्तैर्भजनीयो भगवानित्युपदिशति, अतो भगवान् यदि भक्तवश्यश्चेद्, एवं भावेन भजमानेभ्यो भक्तेभ्योऽवश्यमेवात्मनः प्रियतमरूपेण परिचयं दास्यति । किञ्चेदं प्रियतमभावस्य केवलमभिनयनमित्यपि न वक्तुं शक्यते, यतो 'ये यथा मां प्रपद्यन्ते' इति हि भगवतः प्रतिज्ञा । किञ्चोपर्युक्ते 'सत्स्त्रियः सत्पतिं यथे'ति दृष्टान्तेऽपि सच्छब्दद्वयेन निष्कपटोत्कटप्रेमप्रकर्षं स्त्रीपुंद्वन्द्वमुच्यते, अतो दृष्टान्तानुगुण्यविचारणया भगवतोऽपि भावो भक्तेषु वास्तविक एव भवितुमर्हति, नाभिनयात्मा ।

यद्यपि सर्वजगन्नियन्तरि सर्वसमर्थे सर्वेश्वरे पारवश्यमवश्यमननुरूपमेव स्वरूपमर्यादायास्तथाप्यतिमात्रं स्वरूपसीमाऽतिक्रमोऽपि नानीश्वरे घटते । इदं तु लोके नैकशो विलोकामहे, यत् पृथिवीपतिप्रभृतयः प्रीतिप्रकर्षेण प्रेयस्याः कस्याश्चन कदाचन पारवश्यं प्राप्नुवन्त्यपि, परन्तु स्वार्थापकर्षे शीघ्रमेव तत्पारवश्यपाशादात्मानं निर्मुक्तं कुर्वन्ति, तस्मात्सर्वेश्वर एषां तुच्छजीवानां प्रेमप्रकर्षेण वशीभूतो न कदाचिदप्येतान् स्वचरणसरोजसन्निधानतो दूरीकरोति, सदैतदीयहृदयसर्वस्वभूतः सन्नेतानानन्दयतीत्यनुपमतमएवायं स्वरूपसीमातिक्रमः । अयमेव 'श्रान्तो गजीभिरिभराडिव भिन्नसेतुः' इति वचने 'भिन्नसेतु'–शब्देनोक्तोऽस्ति । अयमेव च पुष्टिस्वरूपस्योत्कर्षः ।

## ईश्वरः सशरीरोऽस्ति ।

(४२) **पूर्वपक्षी**—पूर्वोक्तलीलानां प्रदर्शनं तदैव संभवति यदेश्वरः सशरीरो भवेत् । ईश्वरश्च न सशरीरः, यतः शरीरलाभः पूर्वोपार्जितकर्मणां प्रभावेनैव भवितुमर्हति, सर्वज्ञेनेश्वरेण सह च नाज्ञानकृतकर्मणां सम्बन्धोऽस्ति । यदा च धर्मोद्धारायावतरति क्षितौ, तदानीमपि जीवकर्मनिर्मितं शरीरं प्रेतावेशन्यायेनाविश्य सर्वं संकल्पितं कार्यं सम्पादयति, कार्यविरामे च तच्छरीरं परित्यजति, परन्तु नित्यसिद्धमेवंविधं शरीरं नास्ति, येन भक्तभावानुरूपा लीलाः सर्वत्रापि समये प्रदर्शयितुं शक्येरन् । अतः पूर्वपरिचायितं लीलावर्णनमवास्तविकमेवेति मन्तव्यम् ।

**सिद्धान्ती**—विना कलेवरमीश्वरः पूर्वोक्ता लीलाः प्रदर्शयितुं न शक्नोति चेत्, प्रपञ्चरचनामपि कर्तुं न शक्नोति, तत्कथमीश्वरो जगत्कर्तेत्युच्यते ? । यदि जगदिदमुत्पत्तिमद् विद्यते, ईश्वरादन्यश्च न कश्चिदस्य रचनां कर्तुं क्षमते, अत ईश्वरो जगत्कर्तेति कथ्यते चेत्, यथा कर्तृत्वोपयुक्ता नित्यज्ञानेच्छाप्रयत्ना ईश्वरे स्वीक्रियन्ते, तथैव शरीरमपि स्वीक्रियताम्, यतः शरीरमपि कर्तृत्वोपयुक्तमस्ति । लोके यावन्तः कर्तारो विलोक्यन्ते, ते सर्वेऽपि शरीरवन्त एव सन्ति, अत ईश्वरः कर्ता चेत्, अवश्यं शरीरीति स्वीकार्यम् ।

**पूर्वपक्षी**—यद्यपि कलेवरवन्त एव कर्तारो लोके विलोक्यन्ते, किन्तु कर्तृत्वकलेवरयोः केवलं साहचर्यमस्ति, न तु 'व्याप्ति'—पदवेद्यः कार्यकारणभावाद्यन्यतमः कश्चिदेवंविधोऽसाधारणसम्बन्धोऽस्ति, येन सर्वेषां कर्तृणां कलेवरवत्ताऽवश्यं स्वीकृता भवेत्। केवलं ज्ञानेच्छाप्रयत्नानां कर्तृत्वेन सह व्याप्तिरस्ति, अतः सर्वेष्वपि कर्तृषु ज्ञानेच्छाप्रयत्नाः स्वीक्रियन्त एव। यदि केवलं साहचर्यमपि पदार्थानुमान उपयुज्यते चेत्, पटपर्पटप्रभृतिषु परश्शतेषु पदार्थेषूत्पत्तिरूपयोः साहचर्यं लोचनगोचरीकृतमस्ति, अतः केवलयोत्पत्त्या यथाऽनित्यत्वमनुमीयते, तथा रूपसहितयाऽप्यनुमीयताम्।

यद्यनित्ये वायौ रूपाभावेन रूपसहितोत्पत्तिर्न तत्र वर्तमानस्यानित्यत्वस्यानुमाने हेतुर्भवितुमर्हतीति दोषश्चेद्, अस्मत्कथनानुसारेण व्याप्तिरेवानुमाने उपयुज्यते, न साहचर्यमिति मञ्जूरीक्रियताम्। शरीरकर्तृत्वयोर्नास्ति व्याप्तिरिति न कर्तृत्वेनेश्वरस्य शरीरमनुमातुं शक्यत इत्यशरीर एवेश्वरः।

किञ्च जीवेष्वेवंविधं सामर्थ्यं नास्ति, यत्प्रभावतो विनैव शारीरिकपरिश्रमं कार्यसम्पादनं भवेत्, अत एषां कर्तृत्वं शरीरं विना न सम्भवतीति युक्तमेव, परन्तु जगदीश्वरः सर्वसमर्थोऽस्ति, विनैव शारीरिकपरिश्रमं प्रयत्नमात्रेण सर्वं कार्यं कर्तुं शक्नोतीति नास्य प्रपञ्चरचना शरीरं विनाऽसम्भवा भवितुमर्हति।

किञ्च यदि कथञ्चनेश्वरशरीरं स्वीक्रियेतापि, परन्तु तस्य स्वरूपं यादृशमस्मादृशां लौकिककर्तृणां शरीरस्यास्ति तादृशमेव स्वीकर्तुं शक्यते, न तु विपरीतम्, मानाभावात्। ईदृशेन परिच्छिन्नेन शरीरेण च नास्य महत्तमस्य प्रपञ्चस्य रचना कर्तुं शक्यते। अत एवंविधशरीराङ्गीकरणं 'भक्षितेऽपि लशुने न शान्तो व्याधि'रित्याभाणकानुसरणमस्तीत्यनङ्गीकरणमेव वरम्।

**सिद्धान्ती**—यथाऽत्र जगति न कश्चिदपि कर्ता ज्ञानेच्छाप्रयत्नहीन इति नेत्रपात्रीभवतीति कर्तृत्वस्य ज्ञानेच्छाप्रयत्नैः सह व्याप्तिः स्वीक्रियते, एवं न कश्चिदपि कर्ता देहविहीनः प्रत्यक्षीक्रियत इति देहेन सहापि कर्तृत्वस्य व्याप्तिः स्वीक्रियताम्। एतया च प्रपञ्चरचयिता परमेश्वरः सशरीर इति।

यदि चेश्वरः सर्वसमर्थो विनैव देहं प्रयत्नमात्रेण प्रपञ्चं रचयितुं प्रभवतीत्यतो हेतोरीश्वरस्य शरीरं न स्वीक्रियते चेत्, इच्छाप्रयत्नावपि मा स्वीकुर्वन्तु, केवलेन ज्ञानेनापि परमात्मा प्रपञ्चरचनां कर्तुं शक्ष्यति। यदि ज्ञानेच्छाप्रयत्नैः सह कर्तृत्वस्य व्याप्तिरस्तीत्यत एते स्वीक्रियन्ते चेत्, कर्तृत्वस्य शरीरेण सहापि व्याप्तिरस्तीति शरीरमपि स्वीक्रियताम्।

यद्यपि सर्वेषां लौकिककर्तृणां शरीराणि परिच्छिन्नान्येवेति पश्यामः, परन्तु यथा लौकिकानां ज्ञानेच्छाप्रयत्नानामनित्यत्वेऽपीश्वरस्य ज्ञानेच्छाप्रयत्नाः नित्याः स्वीक्रियन्ते, एवं शरीरमपि तादृशं स्वीक्रियतां, यादृशस्य प्रपञ्चरचनायामपेक्षाऽस्ति ।

## अनुग्रहं विना सशरीरोऽपि न दृश्यते ।

**पूर्वपक्षी**—यदीश्वरस्येदृशं विशालशरीरं चेत्, कथं न दृश्यते, यतो रूपं महत्परिमाणं च दर्शने कारणम्, तदिदं द्वयमपीह विद्यते ।

**सिद्धान्ती**—रूपं महत्परिमाणं च यत्र वस्तुनि वर्तते तस्यावश्यमेव दर्शनं भवतीति नियमो नास्ति । इन्द्रादिदेवेषु सर्वे सदेहाः सन्ति, सर्वेषु रूपं महत्परिमाणं चास्ति, परन्तु नैषामेकोऽपि संप्रति प्रत्यक्षीभवति, तत्कुतः पुनर्देवदेवस्य परमात्मनो दर्शनं नाम?। यद्ययं कृतप्रसादो दयया दर्शनं ददाति चेद् भवति, एवमिन्द्रादिदेवानामपि दर्शनं भवति, परन्त्विदमिन्द्रियसामर्थ्यसाध्यं नास्तीति न लौकिकप्रत्यक्षेऽन्तर्भवति । एतेन सर्वे कर्तारः शरीरिण इति नियमस्य निरासायोपस्थापिता 'अभिनववृक्षाङ्कुराणां कर्ता न शरीरी, शरीरी चेद् दृश्येते'त्यापत्तिरपि दत्तप्रत्युत्तरा ज्ञेया, अदर्शनेन शरीराभावस्य निश्चेतुमशक्यत्वात् ।

वस्तुतस्तु परमात्मनः शरीरं नित्यं वा अनित्यं वा, परिच्छिन्नं वा अपरिच्छिन्नं वा, प्रत्यक्षं वा अप्रत्यक्षं वा ?, इत्याद्याः प्रश्ना एव नोद्भवितुमर्हन्ति, यत ईश्वरः कर्तेति वक्ताऽनुमानप्रयोगो यावदीश्वरस्य शरीरं न प्रमाणीकरोति, तावत्तु शरीरमेवासिद्धमस्तीति कुतस्तन्नित्यं वाऽनित्यं वेत्याद्याः प्रश्नाः । शरीरे प्रमाणीकृते तु जगत्कर्तुरीश्वरस्य यादृशं शरीरं भवितुमर्हति तादृशं सिद्धमेवेति नेदृशैः प्रश्नैः कश्चिदपि विरुद्धोऽर्थः साधयितुं शक्यते । अत आनुमानिकमीमांसयाऽपीश्वरः शरीरीति निःसंशयं सिद्ध्यति ।

## अस्ति प्रपञ्चरचयिता परमात्मा ।

**पूर्वपक्षी**—येन कर्तृत्वसाधकेनानुमानेनेश्वरस्य शरीरं प्रमाणीकर्तुं प्रयतन्ते भवन्तः, तेन त्वीश्वरोऽपि न सिद्ध्यति, कुतः शरीरम् । यतो हि दृष्टान्ताभावेनेदृशं विशालं जगत्केनापि रचयितुं शक्यत इत्येव न संभवति । यदि सावयवा मध्यममानाश्च कलशचैलादयः पदार्थाः कलशकारप्रभृतिभिः कर्तृभिर्विरचिता एव विलोक्यन्ते जगति, न स्वयंभुवः, अतः सावयवाः मध्यममानास्तरुपर्वतादयोऽपि केनचनावश्यं रचिताः स्युरित्युच्यते चेत्, अनेके कर्तारः सन्तु, परन्त्वेको न कश्चन संभवति, यत एतत्प्रपञ्चापेक्षया नितान्तमल्पतमान्यपि भूपभवननिर्माणतडागखननादीनि कार्याणि सहस्रावधिकारिकरमजुदूरादीनामविश्रमपरिश्रममपेक्षन्ते, तत्कथमीदृशं विशालं प्रपञ्चरचनाकार्यमेकेन कर्तुं शक्यते ।

**सिद्धान्ती**—भवत्कथनानुसारेणानेक एव सन्तु प्रपञ्चकर्तारः, परन्तु ते किं जीवा, ईश्वरा वा ?। जीवा इति तु न वक्तुं शक्यते, यतो जीवेषु नाधुनावधि एवंविधं सामर्थ्यं केनाप्यनुभूतमस्ति। यदीश्वराश्चेद्, इदं पूर्वापेक्षयाऽप्यधिकमधमं वचनम्। यत एकस्यैवेश्वरस्य स्वीकरणं न भवद्भ्यो रोचते, कुतोऽनेकेषाम्।

**पूर्वपक्षी**—यद्यपि जीवेषु प्रपञ्चरचनोचितं स्वयंसिद्धं सामर्थ्यं नास्ति, तथापि यथा योगमन्त्रादिप्रभाववैभवेन क्वचन जीवे विलक्षणाः शक्तिविशेषा लक्ष्यन्ते श्रूयन्ते च, तथाऽतिशयिततमेन केनचन कर्मविशेषेणैवंविधस्य सामर्थ्यस्याप्युदयः संभवति जीवेषु। अत एवंविधसामर्थ्यानामनेकेषां जीवानामेव प्रपञ्चकर्तृत्वं, नेश्वरस्येति निर्विघ्नमेव।

**सिद्धान्ती**—नाना जीवा निराधारमाकाशावकाशेऽवतिष्ठमाना मेदिनीसमुद्रसदृशविशालवस्तूनि निर्मान्तीति सिद्धान्तस्य समर्थनाय लोके न कश्चिदप्यनुरूपो दृष्टान्तोऽस्ति। यदि विनापि दृष्टान्तं प्रपञ्चरचनोचितं सामर्थ्यं स्वीक्रियते चेत्, अनेकेषु न स्वीकृत्यैकस्मिन्नेव स्वीक्रियताम् स एवेश्वरः। दृष्टान्ताभावस्तूभयत्रापि तुल्यः, परन्त्वेकस्मिन्नेवैवंविधं सामर्थ्यं स्वीक्रियत इत्यत्र पक्षे लाघवमस्ति।

यद्यपि भूपभवनरचनातडागखननादिष्वनेके कार्यकर्तारो विलोक्यन्ते, परन्तु तेषां सर्वेषामेकः कश्चन नियामकोऽपि भवतीत्यसकृद् दृष्टचरम्। निर्नियामकास्त्वनेके कर्तारो न किञ्चिदपि सम्पादयन्तो दृष्टाः। अतः प्रपञ्चरचयिताऽपि कश्चिदेक एव स्वीकर्तुं शक्यते, नानेके। सचेदृशं विशालकार्यं सम्पादयतीत्यवश्यमीश्वरः।

## ईश्वरस्य दयालुता न्यायशीलता च।

**पूर्वपक्षी**—ईश्वरः प्रपञ्चरचनायां किं स्वतन्त्रः, परतन्त्रो वा ?। स्वतन्त्रश्चेद्, दयालुर्न्यायशीलश्च सन्निर्निमित्तं दुःखाकरोति जीवानिति नितान्तमनुचितम्। परतन्त्रश्चेद्, ईश्वर इति न वक्तुं शक्यते।

**सिद्धान्ती**—दयालुताया न्यायशीलतायाश्चान्यत्रैवोपयोगो भवति, अन्यत्रैव चोपयोगेऽकृते तदकर्ता निर्दयो न्यायशून्यश्चेत्युच्यते। जडजीवात्मकं जगदीश्वरान्न भिन्नमिति श्रुतयो वदन्ति, अतो जीवानां दुःखाकरणेनेश्वरो निर्दयो न्यायशून्यश्चेति न वक्तुं शक्यते। इदं सविस्तरमुपपादितं पूर्वम्।

## नेश्वरे रागद्वेषादिदोषाः सन्ति।

**पूर्वपक्षी**—परमात्मा कस्मैचन प्रयोजनाय प्रपञ्चं रचयति, निष्प्रयोजनं वा ?। प्रयोजनाय रचयति चेत्, शास्त्रेणोच्यमानाऽस्याप्तकामता विरुध्यते। यदि निष्प्रयोजनं रचयति चेत्, परमात्मा प्रमत्त इति प्रमाणितं भविष्यति। यतो न कोऽपि मतिमान् निष्प्रयोजनं क्वापि कार्ये प्रवर्तते।

**सिद्धान्ती**—इयं प्रपञ्चरचना परमात्मना लीलार्थं कृताऽस्ति, अतोऽत्र प्रयोजनस्यान्वेषणं नावश्यकम् । नापि चानया निष्प्रयोजनरचनया परमात्मा प्रमत्त इति वक्तुं शक्यते, निर्निमित्तमतिवेलं खेलत्स्वपि पृथ्वीपालेषु प्रमत्तताव्यवहारस्यादर्शनात् ।

**पूर्वपक्षी**—पूर्वोक्तेन कार्यलिङ्गकेनानुमानेन यथेश्वरः शरीरी चेतनश्चेति प्रमाणीक्रियते, एवं 'जगतः कर्ता रागी द्वेषी च, कर्तृत्वात्, कुलालवत्' इत्याद्यैरनुमानैः 'स ईश्वरो रागी द्वेषी चे'त्यपि प्रमाणीक्रियते । व्याप्तिश्च यथा ज्ञानेच्छाप्रयत्नवपुषां कर्तृत्वेन सहास्ति, तथैव रागद्वेषादिदोषाणामपि कर्तृत्वेन सहास्ति । नहि कश्चिदपि कर्ता रागद्वेषादिनिःशेषदोषशून्यो लक्ष्यते लोके ।

**सिद्धान्ती**—केवलेनानुमानबलेनैवेश्वरस्य स्वरूपं न निरवशेषं निश्चेयम्, सहैव **'यः सर्वज्ञः सर्वशक्तिः' 'सर्वतःपाणिपादान्तं' 'निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्'** इत्यादीनां श्रुतिशिरःशायिवचसामपि साहाय्यं स्वीकरणीयम् । एतानि श्रुतिवचांसि 'ईश्वरः सर्वज्ञः सर्वशक्तिरप्राकृतमूर्तिर्निर्दोषश्चे'ति व्यक्तमेव वदन्ति, अतः पूर्वोक्तानुमानेनापादिता अपि रागद्वेषादिदोषा नेश्वरे स्वीकर्तुं शक्यन्ते ।

वस्तुतस्त्वेवंविध आनुमानिको विचारः केवलं तर्ककवलितमतीनामेवोपयुक्तोऽस्ति । अस्मादृशेभ्यः श्रुतिश्रद्धाधनेभ्यस्तु शतशः श्रुतिस्मृतिपुराणवचनानि; ब्रह्म जडजङ्गमात्मकस्य जगतो हेतुरानन्दमयमचिन्त्यानन्तशक्ति परस्परविरुद्धगुणाधिकरणं चेत्यनन्यप्रतिममसीममहिमानमाश्रावयन्तीति नैवंविधेष्वनुमानेष्वणुमानोऽप्यान्तरः संमानः ।

## ब्रह्मणो गुणा न भिन्ना, नाप्यभिन्नाः, किन्तु भिन्नाभिन्नाः ।

**पूर्वपक्षी**—ब्रह्म, परस्परविरोधिगुणाधिकरणमस्तीति कथनं 'एकमेवाद्वितीयम्' इत्याद्याभिर्भेदनिषेधिकाभिः श्रुतिभिर्विरुध्यते, यतो हि गुणाधिकरणं ब्रह्म लौकिकाधिकरणवदवश्यं स्वगुणेभ्यो भिन्नं स्यात् । यदि नास्ति चेद् भिन्नं, ब्रह्मणि गुणा एव न सन्तीति प्रमाणितं कृतं स्यादेतेन । अतो ब्रह्मणो गुणाः प्रपञ्चवद्ब्रह्मकार्या इत्येव स्वीकरणीयम् । एतेन श्वेतकेतूपाख्याने प्रोक्तायाः सर्वविज्ञानप्रतिज्ञाया अप्युपपत्तिः संपत्स्यते ।

**सिद्धान्ती**—यथाऽऽदित्यस्य तेज आदित्याद्भिन्नमभिन्नं च । धर्मरूपेण प्रतीयते, अतो भिन्नमस्ति । स्वरूपात्मना प्रतीयते, अतोऽभिन्नमपि, एवं ब्रह्मणो धर्मा धर्मतया प्रतीयन्ते, अतो भिन्नाः सन्ति । सच्चिदानन्दस्वरूपाः सन्ति । अतोऽभिन्नाः । इदमेव भेदाभेदमिश्रं स्वरूपमेषां **'एकमेवाद्वितीयम्' 'पराऽस्य शक्तिः'** इत्याद्याभिः श्रुतिभिः प्रमाणीक्रियते । भगवान् वेदव्यासोऽपि **'प्रकाशाश्रयवद्वा तेजस्त्वात्'** इति सूत्रेणैवमेव निर्णयति । किञ्च श्रीमद्भागवते द्वितीयस्कन्धे ब्रह्मस्वरूपवर्णनावसरे **'युक्तं भगैः स्वैरितरत्र चाध्रुवैः' 'सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः'** इत्यादिभिर्वचनैरपि ब्रह्मणो

धर्मा नित्याः, सच्चिदानन्दस्वरूपाश्चेत्युक्तमस्ति । अतो ब्रह्मणो धर्मा भिन्नाभिन्नाः सन्ति, न तु प्रपञ्चवद्ब्रह्मकार्या इति सिद्ध्यति ।

**'एकमेवाद्वितीयम्'** इति श्रुतिस्तु केवलं ब्रह्मभिन्नं न किञ्चिदस्तीति वदति, नैतया ब्रह्मणि स्वरूपभूता धर्मा निषेद्धुं शक्यन्ते, यतो मध्याह्नसमये मार्तण्डादन्यो न कश्चिदवतिष्ठत इति वाक्यात्स्वरूपभूता प्रभाऽपि तदानीं नावतिष्ठत इत्यर्थं न कोऽपि प्रत्येति । अतोऽद्वैतविघातव्याजेन स्वरूपभूतेषु धर्मेष्वन्यथा कल्पनमन्याय एव । उपर्युक्तवचनानुसारेण ब्रह्मण ऐश्वर्यवीर्यादयो धर्माः, देहः, क्रियात्मिका लीला चेति सर्वेऽपि सच्चिदानन्दस्वरूपा नित्यसिद्धा एवेति मन्तव्यम् ।

## लीलाया नित्यता ।

(४४) **पूर्वपक्षी**—ब्रह्मणो धर्मा नित्या इति कथमपि संभवति, यत एते ब्रह्मणि वसन्ति, ब्रह्म च नित्यम् । परन्तु पर्वतपशुपक्षिपुरुषप्रभृतिभिरनेकैरनित्यैः सम्बध्यमानानां गोवर्द्धनोद्धरणादिलीलानां तु न कथञ्चिदपि नित्यत्वं वक्तुं शक्यते ।

**सिद्धान्ती**—यदि लीला नित्या न स्युर्भगवान् शुकाचार्यः परीक्षिताय कथां कथयन् **'यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्' 'व्रजपुरवनितानां वर्द्धयन् कामदेवम्'** इत्यादिषु वचनेषु 'अस्यन्' 'वर्द्धयन्' इत्यादिभिर्वर्तमानवस्तुवाचकैः शब्दैरधर्मध्वंसकामदेववर्द्धनादीनां तदानीं वर्तमानतां न वदेत् ।

**पूर्वपक्षी**—व्याकरणनियमानुसारेण वर्तमानवाचिनामपि शब्दानां भूतभाविवस्तुबोधने उपयोगः सुखेन कर्तुं शक्यते । इदं हि लोके नैकशो विलोकितम्—यद् गमिष्यन्नपि मनुष्यो गच्छामीति वर्तमानवाचिनीं क्रियां प्रयुंक्ते । अतो 'वर्द्धय'न्नित्यादिभिर्वर्तमानवाचिभिः शब्दैः परीक्षितसमयेऽपि श्रीकृष्णलीला वर्तत इति न प्रमाणीकर्तुं शक्यते ।

**सिद्धान्ती**—व्याकरणनियमानुसारेण वर्तमानवाची शब्दो वर्तमानवस्तुबोधनायैव मुख्यतयोपयोक्तुं शक्यते, भूतभाविवस्तुबोधे तु गौण एव प्रयोगः । अतो 'वर्द्धय'न्नित्यादीनां भूतार्थवाचिता न स्वीकर्तुं शक्यते, संभवन्तमपि मुख्यमर्थं परित्यज्य गौणार्थग्रहणे कारणाभावात् ।

**पूर्वपक्षी**—वक्ता यमर्थं मुख्यतया विवक्षते, साक्षात्तद्वाचिषु गौणतास्वीकरणमवश्यमरमणीयं भवति, परन्तु ये शब्दा धर्मादिसम्बन्धेन प्रधानं प्रशंसन्ति, उपलक्षयन्ति वा तेषु गौणतास्वीकरणं नानुचितं भवति । एतत्किल नैकशो विलोकितं लोके यद्भूतपूर्वाऽपि घटना क्वचन वर्तमानवदुल्लिख्यते । यथा भूतपूर्वोऽप्यध्यापकोऽध्यापकशब्देन बोध्यते । अतः प्रधानवर्णनीयस्य भगवतः प्रशंसकेषु 'अस्यन्नधर्मम्' 'वर्द्धयन् कामदेवम्' इत्यादिषु विशेषणेषु गौणवर्तमानतास्वीकृतिर्न विरुध्यते ।

**सिद्धान्ती**—यथा '**लोहितोष्णीषा ऋत्विजः प्रचरन्ति**' इति श्रुतौ शब्दमर्यादाविधया प्रचार एव मुख्यो विधेयोऽर्थः प्रतीयते, परन्तु पूर्वमयं विहितोऽस्ति, अतोऽपूर्वताविरहेण नायं मुख्य इति स्वीक्रियते, किन्तु विशेषणांशो लोहितोष्णीषतैव मुख्यो विधेयोऽर्थ इति स्वीक्रियते, एवं '**जयति जननिवासः**' इति वचनेऽपि शब्दमर्यादाविधया जननिवासः ( श्रीकृष्णः ) जयति ( सर्वोत्कर्षेण वर्तते ) इत्यर्थ एव मुख्यः प्रतीयते, परन्त्वयं नानाप्रमाणेषूपलभ्यत इत्यपूर्वताविरहेण न मुख्यः, किन्तु परीक्षितकथासमयेऽपि जरासन्धयुद्धरासोत्सवादिलीलानां वर्तमानतां प्रमाणीकुर्वन् 'अस्यन्नधर्मम्' 'वर्द्धयन् कामदेवम्' इत्यादिविशेषणांश एव मुख्यः । अतोऽत्र गौणवर्तमानार्थता न स्वीकर्तुं शक्यते ।

किञ्च भगवतः शुकस्य परीक्षितकथासमये यदि लीलानां वर्तमानता विवक्षिता नाभविष्यत्, तर्हि स विशेषणांशस्यास्य प्रयोगमेव नाकरिष्यत् । कथंचन प्रशंसापरिचयाद्यर्थमपेक्षितेऽप्यस्मिन् तथाविधानां शब्दानां प्रयोगमकरिष्यद्, येषु वर्तमानार्थवाचिता न कथमपि स्वीकर्तुं शक्यते ।

## भगवतो गुणकर्मनाम्नां नित्यता ।

(४५) किञ्च दशमस्कन्धे नामकरणसंस्कारनिरूपणप्रसङ्गे यद् '**बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः**' इति गर्गो नन्दमुवाच, एतेनापि भगवतो लीलाः लीलासम्बन्धिनः पदार्थाश्च नित्या इति प्रमाणितं भवति, यतो हि लोकप्रसिद्ध्या बहुतः समयात्पूर्वमाविर्भूतवतां गुणकर्मानुरूपाणां वामनवाराहादिरूपाणां, नाम्नां चाविर्भविष्यतां गोवर्द्धनोद्धरणादिरूपाणां नाम्नां च नामकरणकाले वर्तमानता तदैव संभवति यदैतत्सम्बन्धिनी क्रियात्मिका लीलाः, लीलासम्बन्धिनः पदार्थाश्च नित्याः स्युः । सन्तीति क्रियायाश्च गौणो वर्तमानार्थो नाङ्गीकर्तुं शक्यते, यतः प्रस्तुतवचन इयं क्रियैव प्रधानमिति पूर्वोक्तानुसारेणेह गौणार्थग्रहणस्यायोग्यत्वात् । अतो लीला नित्यैवेति मन्तव्यम् ।

**पूर्वपक्षी**—लीला, लीलासम्बन्धिनः पदार्थाश्च भगवतो गुणकर्मानुरूपेषु गोवर्द्धनोद्धरणादिरूपेषु साक्षात्परम्परया वा स्वरूपसम्पादकतया सम्बध्यन्ते, अत एतेषामवस्थितिं विना नामकरणसंस्कारावसरे गोवर्द्धनोद्धरणादिरूपाणां वर्तमानता न संभवतीति युक्तमेव, परन्तु नामभिः सह नास्त्येवंविधः सम्बन्धो, येनैषामभावे गोवर्द्धनोद्धरणादिनाम्नां वर्तमानता न संभवेत् । वस्तुनोऽभावेऽपि तन्नाम्नो वर्तमानतां लोके विलोकयामः । अतो गर्गाचार्येण नामकरणकाले यत्सर्वेषामपि भगवन्नाम्नां वर्तमानत्वमुक्तम्, तेन तन्नामबोध्यार्थगर्भे समाविष्टानां वस्तूनां वर्तमानता न सिद्ध्यति ।

**सिद्धान्ती**—लीलानां, लीलासम्बन्धिनां पदार्थानां च गुणकर्मानुरूपै रूपैः सह

यथाऽव्यभिचरितः सम्बन्धोऽस्ति, तथा नामभिः सहाप्यस्ति, यतो भगवन्नामानि नित्यानि सन्ति, अर्थानामभावे च नैषां नित्यता जीवितुं शक्नोति । यानि च लौकिकनामानि स्वबोध्यार्थानामभावेऽपि जीवितं धारयन्ति, तानि न वस्तुतो नामानि, किन्तु नामाभासाः, यतः केवलेन कल्पितव्यवहारबलेनैवार्थं बोधयन्त्येतानि, न तु शक्त्या । अतो यदेदृशव्यवहारविदः प्रणश्यन्ति, तदैतानि नामान्यपि प्रणश्यन्ति । अत एवानित्यानीत्युच्यन्ते । इदमेव **'तेषां तु पुत्रपौत्राणां नामान्यपि न शृण्महे'** इत्यादिवचनैरपि प्रमाणीक्रियते । यदि भगवन्नाम्नामपि तत्तन्नामवाच्यानामर्थानामभावे स्थितिः स्वीक्रियते चेद्, लौकिकनामवदेतान्यप्यनित्यानीति प्रमाणीकृतं भविष्यति । अतो भगवन्नाम्नां, तदर्थानां च समानसमयताऽवश्यं स्वीकरणीया ।

किञ्च भगवता व्यासेन वेदनित्यतानिर्वाहाय वैदिकानां शब्दानां वैदिक्यो नित्यव्यक्त्योऽर्था इति स्वीकृतमस्ति, अतो नित्यानां भगवन्नाम्नामप्यर्था नित्या इत्यवश्यमङ्गीकरणीयमेव ।

**पूर्वपक्षी—'बहूनि सन्ति नामानि'** इति वचने तु नामकरणकाले भगवन्नामानि वर्तन्त इत्येवोक्तमस्ति, न तु तानि नित्यान्यनित्यानि वेति विशेष उक्तोऽस्ति । अतो नामनित्यतां सिद्धामिव हेतुतया प्रदर्श्यार्थानां नित्यतासाधनं न युज्यते ।

**सिद्धान्ती**—यदि नामानि नित्यानि न चेत्, बहुतः समयात्पूर्वं प्रकाशमुपगतानि गुणकर्मनिमित्तानि तानि कथं नामकरणकाले वर्तमानानि स्युः ? ।

**पूर्वपक्षी**—यदि भगवतो गुणकर्माणि नामानि चेत्युभयमपि नित्यं चेद्, नामसु गुणकर्माणि निमित्तानीति न कथमपि संभवति, यतो नित्यं वस्तु न निमित्तमपेक्षते ।

**सिद्धान्ती**—रूपाणामिव भगवन्नाम्नामपि यथासमयमाविर्भावो भवति, यथेन्द्रमदभङ्गप्रसङ्गे कामधेनुकृतदुग्धाभिषेकानन्तरं 'गोविन्द' इति नाम्नः, तत्र निमित्तमप्यस्ति गोकुलसंरक्षणम्, परन्त्वितोऽपि पूर्वं पूतनापयःपानप्रसङ्गे भगवतोऽङ्गेषु बीजन्यासं कुर्वत्यो व्रजवरवनिताः **'क्रीडन्तं पातु गोविन्दः'** इत्यवदन् । भगवति गोचारणायारण्यं गते च तद्विप्रयोगे गुणान् गायन्त्यो गोप्यः 'गोविन्दवेणुमनुमत्तमयूरनृत्यम्' इत्यूचुः । अतो गोविन्दनामेन्द्रमदभङ्गप्रसङ्ग एव लब्धजन्म, नेतः पूर्वमासीत्, अनित्यं चेति न वक्तुं शक्यते । एवमेवान्येषामपि नाम्नां नित्यता ज्ञेया ।

इमानि भगवन्नामानि वेदवन्नित्यान्यखण्डशब्दब्रह्मात्मकान्यलौकिकानि सन्ति । एषु सखण्डतां लौकिकतां च प्रेक्षकाः स्वेन प्रज्ञाऽपराधेन प्रेक्षन्ते, वस्तुत एतेषु सखण्डता लौकिकता च नास्ति । यद्यपि लौकिकपुरुषाणां रामकृष्णादीनि नामानि भगवन्नामान्येवेति प्रतिभाति, परन्तु भगवन्नामभ्यो नितरां भिन्नानि पूर्वोक्तानुसारेण नामाभासाश्चेमानि, नतु नामानि, यतो भगवन्नाम्नां सच्चिदानन्दात्मका अर्था न लौकिकपुरुषेषु सन्ति ।

**पूर्वपक्षी**—'बहूनि सन्ति नामानी'ति वचने नामानीतिपर्यन्तं पृथग् वाक्यमस्ति । एतेन सह **'गुणकर्मानुरूपाणी'**ति विशेषणस्य न कश्चिदपि सम्बन्धः । गर्गाचार्य एतेन वाक्येन **'सुतस्य बहूनि नामानि सन्ती'**त्येतावदेव वक्तुं वाञ्छति, न तु विशेषं वक्तुम् । यतोऽत्र नन्दप्रार्थनानुसारेण केवलं नामकरणमेवावश्यकमस्ति, न त्वन्यत्किञ्चित् । अत उक्तविशेषणस्य नामभिः सह सम्बन्धं स्वीकृत्य नामान्यर्थानि च नित्यानीति कथनमप्रमाणमेव ।

किञ्च लोके पाचकपाठकप्रभृतयः शब्दाः प्रवृत्तिनिमित्तानामर्थानामभावेऽपि निरर्गलं प्रयुज्यन्ते । न चैते नामाभासा, न तु नामानीति केनाप्युच्यन्ते । अतः क्वचन काले वाच्यार्थानां तत्सम्बन्धिनां वाऽभावेऽपि न भगवन्नामानि नामाभासा भवितुमर्हन्ति ।

**सिद्धान्ती**—यदि तव सुतस्य बहूनि नामानि सन्तीत्येव गर्गो नन्दाय वक्तुं वाञ्छेच्चेद्, गुणकर्मानुरूपाणां चर्चां न कुर्यात् । यदि नन्दनन्दनस्य प्रभाववैभवबोधनायेयं चर्चा क्रियते चेद्, नाम्नां गुणकर्मानुरूपतानिरूपणमप्येतदर्थमेव । अत्र गर्गाचार्यो नन्दराजायेदं वक्तुं वाञ्छति—'तव सुतस्य नामानि लौकिकनामानीव निरर्थकानि न सन्ति, किन्तु नाम्नां प्रवृत्तिनिमित्तानि गुणकर्माणि नित्यतया सांप्रतमपि तव सुते वर्तन्ते, अतः सार्थकान्यासन् सार्थकानि भविष्यन्ति वेत्येव न, सांप्रतमपि सार्थकानि वर्तन्ते । किञ्चैतान्यनन्तानि सन्ति, अतो यानि नामानि मयेदानीं प्रदर्श्यन्ते, तान्येतान्यधुना निर्मितानि नवीनानि न सन्ति, किन्तु नित्यसिद्धेभ्यो नामभ्य एवोद्धृतानि सन्ति । यानि च नन्दसूनुप्रभृतीनि नामानि त्वत्सम्बन्धं बोधयन्ति, तान्यपि नित्यसिद्धान्यनादीन्येव, न त्वधुना लब्धजन्मानि ।

किञ्च तव सुतस्य नामानि गुणकर्मानुरूपाणि सन्तीति कथनेनेदमपि बोध्यते—यल्लौकिकानि नामानि न गुणकर्मानुरूपाणि सन्ति, केवलेन कल्पितव्यवहारबलेनैवार्थं बोधयन्ति, अतो नामाभासाः सन्ति, यतः शब्दानां प्रधानवृत्त्यैवार्थबोधनं स्वभाव इति तत्परित्याग आभासत्वमेव वक्तुं शक्यते ।

## वेदे लीलानां स्वरूपम् ।

(४४—४६) **पूर्वपक्षी**—यद्यपि पूर्वोक्तैः पौराणिकवचनैर्लीलानां नित्यता प्रमाणीक्रियते, परन्तु वेदोपनिषत्सु नैवंविधानि वचनानि लोचनगोचरीभवन्ति, यानि लीलानित्यतां प्रमाणीकुर्युः । अतः पूर्वोक्तपौराणिकवचनानामन्यः स्यादभिप्रायः कश्चिदित्यपि संभाव्यते । किञ्च पुराणानि वेदविवरणरूपाणि सन्ति, यद्येष्वेवंविधं विस्तीर्णं विवरणं लीलानित्यताया लभ्यते चेद्, वेदेऽप्येतन्मूलेन कियताऽवश्यमेव भवितव्यम् । यदि तन्नोपलभ्यते चेद्, उपर्युक्तसंभावनैव लब्धावतारा भवितुमर्हति ।

**सिद्धान्ती**—ब्रह्मणो नित्यलीलावर्णनकारिणो नानामन्त्राः सन्ति वेदोपनिषत्सु। तत्रान्यनिरपेक्षा ब्रह्मणो लीला **'तदेजति तन्नैजति'** इत्याद्याभिरौपनिषदश्रुतिभिः प्रतिपाद्यते। अत्र श्रुतौ 'एजति' 'नैजति' इतिद्वयेन वर्तमानवाचिना कम्पनं, तदभावस्तदाधारभूतं ब्रह्म स्वरूपं च सर्वदा वर्तत इति बोध्यते।

(४७) अन्यसापेक्षां च ब्रह्मलीलामेते संहितामन्त्रा निरूपयन्ति। तथाहि—

**'विष्णोः कर्माणि पश्यत, यतोऽव्रतानि पस्पशे, इन्द्रस्य युज्यः सखा'।**

अर्थः—इन्द्रसखो विष्णुरिन्द्रमदभङ्गगोपाङ्गनाविहारयशोदास्तनपानादीनि यानि कर्माणि कृतवान्, तानि पश्यत।

इयं श्रुतिर्यद्विष्णुकर्मणां सर्वदा दर्शनमुपदिशति, एतेनापि विष्णुकर्माणि नित्यानीति प्रमाणीकृतं भवति, यतः कदाचिद्वर्तमानानामनित्यानां दर्शनं न सर्वदोपदेष्टुं शक्यते।

**(४८)'जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभिपौंस्यं रणम्। अवृश्चदद्रिमवसस्यदस्रृजदस्तभ्नान्नाकं स्वपस्यया पृथुम्'॥**

अर्थः—येन जातमात्रेणैव पूतनातृणावर्तप्रभृतयो नाशिताः। अनन्तरं मथुराद्वारकादिषु पुरीषु जरासन्धशाल्वसौभादिदैत्यैः सह लडति स्म। किञ्च यदा शक्रः कुपितः सन् गोकुलविनाशाय वृष्टिं चक्रे, तदा गोकुलरक्षाऽऽकाङ्क्षया गोवर्द्धनगिरिमुत्थाप्य विशालमाकाशमाच्छादयत्।

अत्र श्रुतौ यद्यपि नित्यताप्रमाणीकरणानुगुणः कश्चिदपि शब्दो न विशदं प्रतीयते, परन्तु नित्यस्य वेदस्यार्थोऽपि नित्य एव भवितुमर्हतीति पश्चिममीमांसायां प्रमाणीकृतमस्ति भगवता व्यासेन, अत एतच्छ्रुतिनिरूपिता लीला नित्येत्यवश्यं मन्तव्यमेव।

किञ्च यथा **'जयति जननिवासः'** इति वचने 'अस्यन्' 'वर्द्धयन्' इति वर्तमानवाचिनौ शब्दौ प्रयुक्तौ वर्तेते, तथा **'व्रजं च विष्णुः सखिवानपोर्णुते'** इति गोवर्द्धनोद्धरणवर्णनकारिणि मंत्रे 'अपोर्णुते' इति वर्तमानार्थवाची क्रियाशब्दः प्रयुक्तोऽस्ति, अतः श्रुत्याऽपि लीला नित्येति निर्विचिकित्सं प्रमाणीकृतं भवति।

**पूर्वपक्षी**—लीलानित्यतायां तु कतिपयानि प्रमाणानि प्रदर्शितानि, परन्तु गोकुलगोवर्द्धनादयो लीलासम्बन्धिनः पदार्था नित्या इति, यावन्न सिद्धं भविष्यति, तावदन्यसापेक्षा ब्रह्मणो लीला नित्येति वक्तुं न शक्ष्यते। अतो गोकुलगोवर्द्धनादिनित्यताया अपि प्रमाणीकरणाय प्रमाणानि प्रदश्यर्न्ताम्।

## लीलास्थानानि नित्यानि भगवत्स्वरूपाणि च।

(४९) **सिद्धान्ती**—लीलासम्बन्धिनः पदार्था नित्या इति वदन्त्यः श्रुतयस्तु बह्व्यः सन्ति, परन्त्विह स्थालीपुलाकन्यायेन कतिपयाः प्रदर्श्यन्ते। ऋक्संहितायां यथा—

**'ता वाँ वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।**
**अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि' ॥**

अर्थः—वयं तत्रत्यवस्तूनि लब्धुं वाञ्छामो, यत्र दीर्घशृङ्गा रमणीया गावः सन्ति, यच्च गोपगृहिणीकामकल्पद्रुमस्य भगवतो विष्णोर्व्यापकं परमं पदं सर्वदेह वसुधायां विद्योतते ।

अत्र श्रुतौ विष्णोः परमं पदं ( स्थानं ) गोकुलं निरूप्यते । तच्च **'जयति जननिवासः'** इति वचने यथा 'अस्यन्' 'वर्द्धयन्' इत्यादिभिर्वर्तमानार्थवाचिभिः क्रियाशब्दैर्लीला नित्येति बोध्यते, तथाऽत्र श्रुतौ 'अवभाति' इति वर्तमानार्थवाचिन्या क्रियया नित्यमिति बोध्यते । किञ्च 'भूरि'पदेनोच्यमाना व्यापकताऽपि नित्यतां प्रमाणीकरोति, यतो व्यापकतापि नित्यस्यैव संभवति ।

एतन्मंत्रसमानार्थक एको मंत्रः कृष्णयजुर्वेदसंहितायामपि विद्यते, यन्निकट एवायं मंत्र उपलभ्यते—

**'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम्' ।**

एताभ्यां द्वाभ्यामपि मन्त्राभ्यां गोकुलं नित्यमिति निःसंशयं प्रमाणितं भवति । किञ्चोत्तरमंत्रे **'सदा पश्यन्ति सूरयः'** इत्युच्यमानं सार्वदिकदर्शनमपि विष्णुपदस्य नित्यतायामेव संगच्छते, यतो नित्यस्यैव सर्वदा दर्शनं भवितुमर्हति ।

## नित्यलीलास्थानानि भुवि वर्तन्ते ।

**पूर्वपक्षी**—पूर्वोक्तश्रुतौ यन्नित्यलीलास्थानं निरूप्यते, तत्क वर्तते ? । भुवि वर्तते चेत्, कुतो न लोचनगोचरीभवति ।

किञ्च यथा मृत्युपातालादिलोकेषु वसन्तो जीवाः सक्लेशाः सन्ति, तथाऽत्र वसन्तोऽप्यवश्यं स्युः, लोकसामान्यात् । अत इदं केवलानन्दमयं नित्यलीलास्थानमित्यपि वक्तुं न शक्यते ।

**सिद्धान्ती**—आसां सर्वासामप्याशङ्कानां समाधानं 'तद्विष्णो'रिति श्रुतौ पठितेन **'दिवीव चक्षुराततम्'** इति पदेन क्रियते । तथाहि—अत्र पदे दृष्टान्तत्रयमस्ति, दिवीव, चक्षुरिव, आततं चक्षुरिवेति । तत्र प्रथमदृष्टान्तेनेदमुच्यते—यथा दिवि ( स्वर्गे ) अक्लेशलेशं केवलं सुखमस्ति, तथाऽत्रापि । नात्र विहरतां नित्यलीलासुखमनुभवतां भक्तानां स्वल्पोऽपि क्लेशसंपर्कः । द्वितीयेन दृष्टान्तेनेदमावेद्यते—यथा नयनेन्द्रियं दिव्यज्ञानसंपन्नैर्योगिजनैरेव साक्षात्कर्तुं शक्यते, नान्येन । यस्मिन् गोलके चावतिष्ठते, तदपि स्वनाम्ना विख्यापयति । एवं गोकुलमपि येषु दामोदरो दयते, तान् विना नान्यस्य लोचनगोचरीभवति, यत्र भूमिभागे चावतिष्ठते, तमपि स्वनाम्ना प्रख्यापयति । तृतीयदृष्टान्तेनैतत्प-

ष्टीक्रियते—यथा नयनेन्द्रियं तैजसमस्ति, तथापि रूपस्पर्शप्रभृतीनां तदीयगुणानामप्रकटतया प्रकाशेन तमसि तैजसतां न परिचाययति, एवं नित्यलीलास्थानं गोकुलमपि केवलानन्दमयमलौकिकमस्ति, परन्तु परमात्मेच्छया प्रच्छन्नप्रभावमवतिष्ठते, अतोऽत्र वर्तमानेषु भक्तेषु कामकोपप्रभृतयो दोषा दृशोर्गोचरा भवन्ति, वस्तुतोऽत्र दोषा न सन्ति। एवमेतेन दृष्टान्तत्रयेण सर्वासामपि पूर्वोक्ताशङ्कानां समुचितं प्रत्युत्तरं प्रत्तमिति सर्वं सुस्थम्।

**पूर्वपक्षी**—तन्नित्यलीलास्थानं क्व वर्तत इति पूर्वोक्तप्रश्नस्य न किमपि समुचितं प्रत्युत्तरं प्राप्तम्, केवलं द्वितीयदृष्टान्ताशयविवरणेन भुवि वर्तमानमशेषप्रत्यक्षं गोकुलं नित्यलीलास्थानस्यानन्दमयस्य गोकुलस्याभिव्यक्तिस्थानमस्ति, नयनेन्द्रियस्य गोलकमिव, न त्विदमेव नित्यलीलास्थानमस्तीति प्रतीयते, परन्तु एवं स्वीकारे गोकुलवद्गोवर्द्धनयमुनादीनां सर्वेषामपि नित्यलीलासम्बन्धिनां स्वरूपमेवंविधमेवेति प्रमाणीकृतं भविष्यति। तथा चैषामशेषप्रत्यक्षं स्थूलस्वरूपं श्रद्धाभक्तिपुरःसरं परिचरतां परिश्रमः शून्यफलः, व्रजवासयमुनास्नानादीनि च भ्रममूलानि निरर्थकानीति सिद्धं भविष्यति।

**सिद्धान्ती**—यथा नयनेन्द्रियं गोलकमभिव्याप्य तद्द्वारैव दर्शनादिकार्यं संपादयति, एवं नित्यलीलास्थानं गोकुलमपि सर्वप्रत्यक्षे गोकुले सन्निधायैतद्द्वारैव सर्वं स्वं प्रभावं परिचाययति। ईदृशमेव गोवर्द्धनयमुनादीनामपि स्वरूपं वर्तते। अतो व्रजवासयमुनास्नानादीनि भ्रममूलानि निरर्थकानि चेति न वक्तुं शक्यते।

अथवा सर्वैः साक्षात्क्रियमाणं गोकुलमेव नित्यलीलास्थानं श्रुतिभिर्वर्ण्यमानं गोकुलमस्ति, दर्शकाः स्वेनेन्द्रियदोषेणैवास्य स्वरूपे विपर्ययं पश्यन्ति। ईदृशमेव च स्वरूपं गोवर्द्धनयमुनादीनामप्यस्ति।

## लीलास्थानानां स्वरूपे विपरीतप्रतीतिः।

**पूर्वपक्षी**—ये गोकुले न वसन्ति, तेषां यदि गोकुलस्य स्वरूपं विपरीतं प्रतिभाति चेत्, कथञ्चिदपि शक्यसंभवम्, परन्तु ये गोकुल एव निरन्तरं वसन्ति, तेषां गोकुले विपरीतप्रतिभानं न संभवति, यतः सच्चिदानन्दात्मकेऽलौकिके नित्यलीलास्थाने वसत्सु जीवेषु नाज्ञानभ्रमप्रभृतिभिर्लौकिकधर्मैः प्रादुर्भवितुं शक्यते।

**सिद्धान्ती**—केवलानन्दमयेष्वलौकिकेषु नित्यलीलास्थानेषु भ्रमदुःखादिलौकिकधर्माणामुदयो यद्यपि न श्रद्धेयः प्रतिभाति, परन्तु सर्वतन्त्रापरतन्त्रस्य परमात्मन इच्छा, अन्यैरसम्भावनीयमपि कदाचन प्रदर्शयतीति पश्यामः। यथा नित्यलीलायां संमिलितानां व्रजवासिनां '**क्षुधार्ता इदमब्रुवन्**' '**त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल**' इत्यादीनि दुःखानि। अतः परमात्मेच्छया साक्षाद्गोकुले वसत्स्वपि जीवेषु भ्रमदुःखादिदोषाणामुदयः शक्यवचन एव।

(४८) **पूर्वपक्षी—'दिवीव चक्षुराततम्'** इति दृष्टान्तविवरणेन **'तावाँ वास्तूनि'** इति श्रुतिस्थेन 'अत्र'-पदेन च नित्यलीलास्थानस्य गोकुलस्यावस्थितिर्भुवि वर्तत इति प्रमाणीकृतं पूर्वम्, परन्तु महाप्रलयसमये भुवि विनष्टायामत्र वर्तमानं गोकुलमपि विनङ्क्ष्यति, यतो विनाऽधिकरणं नावस्थातुमर्हति कश्चिदपि । अतः **'ता वाँ वास्तूनि'** इत्यादिश्रुतिभिः प्रमाणीक्रियमाणं नित्यत्वं कथं निर्वहतु ? ।

**सिद्धान्ती—**यथा घटपटप्रभृतीनां परिच्छिन्नपदार्थानामाधारः पृथिवी वर्तते, तथा न गोकुलस्याधारः पृथिवी, किन्तु जीवात्मानं व्यापकं मन्यमानानां मते यथा जीवात्मन आधारः शरीरं, तथा गोकुलस्याधारः पृथिवी वर्तते । अतः शरीरस्य नाशेऽपि यथा जीवो न विनश्यति, एवं पृथिवी विनाशेऽपि गोकुलं न विनश्यति ।

## लीलास्थानानां व्यापकता सत्यता च ।

**पूर्वपक्षी—**यथा जीवो व्यापकोऽस्ति, एवं गोकुलमपि व्यापकं चेत्तदाऽयं दृष्टान्तः सङ्गच्छते । अतो गोकुलं व्यापकमस्तीत्यत्र किमपि प्रमाणं प्रदर्श्यताम् ।

**सिद्धान्ती—'ता वाँ वास्तूनि'** इति श्रुतौ 'भूरि'-शब्देन गोकुलं व्यापकमस्तीति प्रमाणीकृतं पूर्वम्, इतः परमपि **'व्यापिवैकुण्ठसंज्ञितः'** इति बृहद्वामनपुराणोक्त्या प्रमाणीकरिष्यते ।

किञ्च यथा **'अथ यदिदमस्मिन् ब्रह्मपुरे'** इति श्रुतौ 'ब्रह्मपुर'-शब्दस्य शरीरमर्थ इति मन्वाना विद्वांसः **'ब्रह्मपुरे जीर्णे ध्वस्ते' 'नास्य जरयैतज्जीर्यति'** इत्यादीनां परस्तात्पठितानां वाक्यानामनुरोधेन ब्रह्मपुरं नश्वरमिति स्वीकुर्वन्तोऽपि ब्रह्मपुरान्तर्वर्ति वेश्म नित्यं स्वीकुर्वन्ति, एवं **'ता वाँ वास्तूनि' 'विष्णोर्यत्परमं पदम्'** इत्याद्यानां पूर्वं प्रोक्तानां श्रुतीनामनुरोधेन, पृथिव्या अनित्यत्वेऽपि गोकुलं नित्यमिति स्वीकुर्मः । आधारस्यानित्यतायामाधेयमप्यनित्यं भवतीति नियमः श्रौतवस्तुषु न संभवति । अत्र यावद्वाचनिकं प्रमाणं भवति ।

किञ्च वयं त्वस्यां दहराधिकरणश्रुतौ 'ब्रह्मपुर'-शब्दस्य नित्यलीलास्थानमर्थ इति स्वीकुर्मो, न तु शरीरमिति, यतः परस्तात् 'एतत्सत्यं ब्रह्मपुरम्' इति वचनेन ब्रह्मपुरस्य सत्यता प्रोक्ताऽस्ति । प्रापञ्चिकस्य जीवशरीरस्य चैवं विशिष्य सत्यता वक्तुं न शक्यते ।

**पूर्वपक्षी—**उक्तदहराधिकरणश्रुतिप्रकरणे प्रथमं **'यदेतज्जरा वाऽऽप्नोति प्रध्वंसते वा, किं ततोऽतिशिष्यते'** इत्यंशेन ब्रह्मपुरप्रणाशे जाते किमवशिष्टमवतिष्ठत इति पृष्टमस्ति । अनन्तरं च **'नास्य जरयैतज्जीर्यति'** इत्यंशेन ब्रह्मपुरस्यान्तर्वर्तमानं वेश्म जरानाशौ न स्पृशत इत्युक्त्वा ब्रह्मपुरस्य जरानाशौ स्वीकृतौ वर्तेते । अतो ब्रह्मपुरं नित्यलीलास्थानमिति न वक्तुं शक्यते ।

**सिद्धान्ती—'नास्य जरयैतज्जीर्यति'** इत्यंशेन ब्रह्मपुरस्य जरानाशौ न स्वीकृतौ, किन्तु ब्रह्मपुरान्तर्गतं वेश्म नित्यमिति प्रमाणीकर्तुं 'यदि ब्रह्मपुरं जीर्येदपि नश्येदपि, तथापि ब्रह्मपुरान्तर्गतं वेश्म न जरानाशौ स्पृशत इत्यभिप्रायकस्तर्कः प्रदर्शितोऽस्ति तत्र। अतो यथा वह्निर्न भवेद्धूमोऽपि न भवेदिति तर्कस्य वह्न्यभावप्रमाणीकरणे नोपयोगो भवितुमर्हति, एवं **'नास्य जरयैतज्जीर्यति'** इति तर्कस्यापि ब्रह्मपुर–जरानाशप्रमाणीकरणे नोपयोगो भवितुमर्हति। किञ्चात्र श्रुतौ ब्रह्मपुरस्य जरानाशौ स्वीकृतौ चेत्, पुनरग्रे **'एतत्सत्यं ब्रह्मपुरम्'** इत्यंशेन ब्रह्मपुरं सत्यमिति न वदेत्। अतो ब्रह्मपुरशब्दस्य शरीरादिकं किमप्यनित्यवस्तु नार्थः, किन्तु नित्यलीलास्थानमर्थः।

**पूर्वपक्षी**—युष्माकं मते तु सर्वः प्रपञ्चः सत्योऽस्ति, अतो ब्रह्मपुरशब्दस्यार्थः कश्चित् प्रापञ्चिकपदार्थोऽपि भवितुमर्हति, तत्कुतो ब्रह्मपुरं नित्यलीलास्थानमेवेति भवद्भिरागृह्यते?।

**सिद्धान्ती—'एतत्सत्यं ब्रह्मपुरम्'** इत्यतः पश्चात् **'अस्मिन् कामाः समाहिताः'** इत्यंशेन ब्रह्मपुरे, नित्यलीलायां संमिलितानां भक्तानामर्थे आनन्दभोगसाधनानि न्यस्तानि सन्तीत्युक्तमस्ति, न चैवंविध आनन्दभोगसाधनानां न्यासः कचन प्रापञ्चिकपदार्थे संभवति। अतो ब्रह्मपुरशब्दस्यार्थः कश्चित्प्रापञ्चिकपदार्थो न भवितुमर्हति।

## लिलासम्बन्धिनः पदार्थाः प्रापञ्चिकपदार्थेभ्यो भिन्नाः प्रापञ्चिकपदार्थसदृशाश्च सन्ति।

**पूर्वपक्षी**—प्रस्तुतश्रुतौ **'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश'** इत्यंशेन ब्रह्मपुरे पृथिव्याकाशादीनां प्रापञ्चिकपदार्थानां वर्णनं कृतमस्ति। अतो ब्रह्मपुरशब्दस्य प्रपञ्चोऽर्थ इत्येव मन्तुमुचितम्।

**सिद्धान्ती**—प्रस्तुतश्रुतौ **'यावान् वाऽयमाकाशः'** इत्यनेन ब्रह्मपुरान्तर्गतमाकाशं प्रापञ्चिकाकाशसदृशमस्तीत्यच्यते। इदं च तदेव संभवति, यदा ब्रह्मपुरान्तर्गतमाकाशं प्रापञ्चिकमाकाशं च परस्परं भिन्नं स्यात्। यतो न किमपि वस्तु स्वयं स्वसदृशमस्तीति केनापि वक्तुं शक्यते। किञ्च ब्रह्मपुरान्तर्गतमाकाशं प्रापञ्चिकाकाशसदृशमस्तीति कथनमुपलक्षणम्, अत एतेन प्रस्तुतश्रुतौ वर्णिताः सूर्यशशिनक्षत्रादयः सर्वेऽपि प्रापञ्चिकेभ्यः सूर्यशशिनक्षत्रादिभ्यो भिन्नाः सन्तीति प्रमाणीकृतं भवति। अत एवैषामधिकरणं ब्रह्मपुरं न प्रपञ्चः, किन्तु नित्यलीलास्थानमित्यवश्यं स्वीकरणीयम्।

**पूर्वपक्षी—'अस्मिन् कामाः समाहिताः'** इति श्रुत्यंशेन तु ब्रह्मपुरशब्दस्य शरीरमर्थ इत्येव मन्तुमुचितमिति निश्चीयते, यतः 'काम'–शब्दस्य मनोरथोऽर्थः। मनोरथश्च शरीरान्तर्वर्तिनि आत्मन्येव समुत्पद्यते।

**सिद्धान्ती**—'कामाः समाहिताः' इत्यत्र यदि कामशब्दस्य मनोरथोऽर्थश्चेत्, श्रुतिः 'कामाः समाहिताः' इत्यनुक्त्वा 'कामा उत्पन्ना' इति वदेत् । यतो हि 'समाहिताः' इत्यस्य स्थापिता इत्यर्थोऽस्ति, मनोरथश्च नैवंविधं वस्तु यत् क्वचित् स्थापयितुं शक्येत । अतः 'कामाः' इत्यस्य कामभोगसाधनान्यर्थः इत्येव मन्तुमुचितम् । अलौकिककामश्चानन्द एव, अत आनन्दभोगसाधनानीति शब्देनायमर्थः पूर्वं परिचायितोऽस्माभिः । एवंविधानां कामभोगसाधनानां स्थापनं च न क्वापि शरीरे संभवति, अतो ब्रह्मपुरशब्दस्यापि नित्यलीलास्थानमेवार्थः स्वीकृतः ।

**लीलास्थानानि तत्र वर्तमाना भक्तजनाश्च ब्रह्माभिन्नाः ।**

**पूर्वपक्षी**—**'अस्मिन् कामाः समाहिताः'** इति वाक्यानन्तरं **'एष आत्माऽपहतपाप्मा'** इत्यंशेन ब्रह्मपुरमात्मेत्युक्तमस्ति । यदीदं ब्रह्मपुरं नित्यलीलास्थानं भवेत्, श्रुतिरेतस्य बोधाय 'आत्मे' ति पदं कथं वदेत् ।

**सिद्धान्ती**—प्रस्तुतश्रुतौ **'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराऽऽकाशः'** इत्यंशे यत्पुण्डरीकं वेश्म (भक्तहृदयकमलं)तदन्तर्गतं परमव्योमाख्यमाकाशं च दहरशब्देनोक्तमस्ति तदिदं ब्रह्मेति **'दहर उत्तरेभ्यः'** इति सूत्रेण भगवान् वेदव्यासःकथयति, अतः श्रुतिर्ब्रह्मपुराभिधं नित्यलीलास्थानं यदात्मेति शब्देन बोधयति, तत्समुचितमेव ।

किञ्च बृहद्वामनपुराणे भृगुहिरण्यगर्भसंवादे श्रुतीनामेका कथाऽस्ति, तत्र—

**'ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।**
**वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥**
**आनन्दमात्रमिति यद्वदन्तीह पुराविदः ।**
**तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥**

इत्यादिभिर्वचनैर्वाङ्मनोऽगोचरं निर्गुणमानन्दमात्रं स्वरूपमस्मभ्यं प्रदर्शयेति श्रुतिभिः प्रार्थना कृताऽस्ति, एतत्प्रार्थनानुसारेण च भगवता यत्स्वरूपं प्रदर्शितं तत् **'यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः' 'यत्र निर्मलपानीया कालिन्दी सरितां वरा'** इत्यादिभिर्वचनैर्वर्णितं वर्तते । यदि वृन्दावनगोवर्द्धनादीनि नित्यलीलास्थानानि यमुनादयो नित्यलीलासहायाश्च ब्रह्म—स्वरूपे नान्तर्भवन्ति चेद्, ब्रह्मदर्शनाकाङ्क्षया प्रार्थितो भगवानेतानि न प्रदर्शयेत् । अतो न केवलं ब्रह्मपुरं, किन्तु नित्यलीलासम्बन्धिनः सर्वेऽपि पदार्था ब्रह्मात्मका इत्यवश्यं स्वीकरणीयमेव ।

अत एव प्रलयसमये पृथिव्या अभावेऽपि गोकुलवृन्दावनादीनां लीलास्थानानामवस्थितिर्नासम्भवं भजते, यतो हि ब्रह्मात्मकं वस्तु ब्रह्मसामर्थ्येन सर्वदा ध्रियमाणमस्तीति नाधारमपेक्षते । भगवान् स्वयं 'ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम्' (अर्थः—मदर्थे त्यक्तलोकधर्मानहं धारयामि पुष्णामि च) इति वचनेनेदं वदति ।

**पूर्वपक्षी**—आधेयाः सर्वत्राधारेभ्यो भिन्ना भवन्तीति बहुलं विलोक्यते, अतो लीलायुतस्य ब्रह्मस्वरूपस्याधिकरणानि चेद् गोकुलवृन्दावनादीनि, ब्रह्मणो भिन्नानीमानीत्यङ्गीकरणमपि परममावश्यकम्। किञ्च न केवलं भिन्नानि, किन्तु अत्यन्तभिन्नानि, यतो हि **'एकमेवाद्वितीयम्'** इति श्रुतिरेकं ब्रह्मेति वदतीति परस्परं तरुष्विव सजातीयभेदो नेह स्वीकर्तुं शक्यते।

**सिद्धान्ती**—लौकिका आधेया आधारेभ्यो भिन्नाः सन्तीति 'प्रत्यक्ष'—प्रमाणेन निश्चीयते, अत एवं स्वीकरणं रमणीयमेव, परन्तु वृन्दावनादीन्यधिकरणानि लीलायुताद्ब्रह्मस्वरूपाद्भिन्नानि सन्तीति न व्यावहारिकैः प्रत्यक्षादिभिः प्रमाणैः प्रमीयते। दहराधिकरणश्रुतौ, व्याससूत्रे बृहद्वामनपुराणवचनेषु च लीलायुतेन ब्रह्म—स्वरूपेण सहैषामभेदोऽस्तीति प्रतिपादितं विद्यते, अतोऽत्र त्वभेद एव स्वीकर्तुं शक्यते। अन्यच्च यथैषां लीलास्थानानां भगवता सहाभेदोऽस्ति, तथा भक्तानामप्यस्तीति **'यदक्षरे परमे प्रजाः'** इति श्रुतिः कथयति। यद्ब्रह्म अक्षरात्मके व्यापिवैकुण्ठलोके (प्रजाः) भक्तस्वरूपमस्तीत्यस्याः श्रुतेरर्थः। इदं कथनमुपलक्षणम्, अतः सर्वेषामपि लीलासम्बन्धिनां पदार्थानां भगवता सहाभेदोऽस्तीति सिद्ध्यति।

यद्यपि **'एकमेवाद्वितीय'**मिति श्रुतिर्ब्रह्मणो नानारूपेषु प्राकृतदृष्ट्या प्रतीयमानं भेदं निषेधति, परन्तु नैतयाऽपि तादात्म्यशरीरे प्रविष्ट ऐच्छिको भेदो निषेद्धुं शक्यते। अतो नित्यलीलासम्बन्धिनां वस्तूनां भगवता सह यो भेदः स एवंविध एव।

## मिथिलाकुरुक्षेत्रादीनि न नित्यलीलास्थानानि।

**पूर्वपक्षी**—भगवता यथा मथुरावृन्दावनादिषु लीला कृता, तथा मिथिलाकुरुक्षेत्रादिष्वपि कृतेति पुराणैः प्रतिपाद्यते। तथाहि—कौरवपाण्डवसमरसमये कुरुक्षेत्रं, श्रुतदेवबहुलाश्वयोरनुग्रहाय मिथिलां, निजाग्रजातसहोदराणामानयनाय बलिनिलयं सुतलं, गुरुसुतानयनाय संयमनीं च हरिर्निजचरणार्पणेन पवित्रयामासेति श्रीभागवतं वदति। एवंविधान्याख्यानान्यन्यान्यपि बहुषु पुराणेषु सन्ति, अत एतानि समस्तान्यपि नित्यलीलास्थानानीति कुतो न स्वीक्रियते।

**सिद्धान्ती**—भगवान् श्रीनिवासः स्वनिवासेन कियत्समयपर्यन्तं मिथिलादिप्रदेशानसीमसौभाग्यभाजश्चकारेति सबहुमानं मन्यामहे, परन्तु नैतावता मिथिलादीनि नित्यलीलास्थानानीति सिद्ध्यति। यदीमानि नित्यलीलास्थानानि चेद्, यथा **'मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः'** **'यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः'** इत्यादीनि नित्यलीलासम्बन्धबोधकानि वचनानि मथुरावृन्दावनादीनां विषये प्राप्यन्ते, तथा मिथिलादीनामपि विषये प्राप्येरन्। अतो मिथिलादीनि नित्यलीलास्थानानीति न वक्तुं शक्यते।

## नित्यलीलासम्बन्धी कालो नित्यः ।

**पूर्वपक्षी**—यथा रसात्मकनित्यलीलायां सामग्रीरूपेण गोकुलगोवर्द्धनादयः परमरमणीयाः प्रदेशा अपेक्ष्यन्ते, एवं रमणीयः कालोऽप्यपेक्ष्यते । यतः शारदवसन्तादिसमुचितसमयं विना न भावः पुष्टः सन् रसत्वमापद्यते, अतो न रसात्मकलीला तथाविधसमयं विना भवितुमर्हति, परन्तु शारदवसन्तादिसदृशः शोभनः समयो न निरन्तरस्थायीति तत्र वर्तमाना लीला नित्येति न वक्तुं शक्यते ।

(४९) **सिद्धान्ती**—आभीरकुमारीभ्यो वरं वितरता भगवता **'मयेमा रंस्यथ क्षपाः'** इति वचने प्रत्यक्षवस्तुवाचिना 'इमाः' इति शब्देन नित्यलीलोपयोगिन्यो निखिला अपि रात्रयः सम्प्रति वर्तन्त इति प्रमाणीकृतमस्ति । इयं च वरदानावसरे सर्वासामपि रात्रीणां वर्तमानता नित्यतां विना न शक्यवचना, अत एतत्समानन्यायेन नित्यलीलासम्बन्धी समयः सर्वोऽपि नित्य एवेति सिद्ध्यति ।

**पूर्वपक्षी**—वरप्रदानावसरे या रात्रिर्वर्तमानाऽस्ति, तस्यामनन्तररात्रीणामारोपं कृत्वा 'इमाः' इति शब्दः प्रयुज्यते । किञ्च 'इमाः' इति शब्दो बुद्धिस्थं वस्तु बोधयतीत्यपि बहुत्र दृष्टचरम् । अत एतेन, भगवतोच्यमाना रात्रयः, एतत्समानन्यायेन नित्यलीलासम्बन्धी सर्वोऽपि समयश्च नित्य इति न सिद्ध्यति ।

**सिद्धान्ती**—**'मयेमा रंस्यथ क्षपाः'** इति वरवचनं भगवता चीरहरणावसरे प्रातः प्रोक्तमस्ति, तदानीं च न काचन रजनी वर्तमानाऽस्ति, यस्यामनन्तररात्रीणामारोपः क्रियेत । किञ्च बुद्धिस्थवस्तुवाचकता तु यदीदं वरदानवचनं परमात्मनो न भवेत्तदा संभवेत् । परमात्मा हि सत्यसङ्कल्पः, वस्तुप्रत्यक्षत्वे तदीयबुद्धिविषये सति वस्तु प्रत्यक्षमेव भवति, न बुद्धिकल्पितं प्रत्यक्षत्वारोपमपेक्षते, अतः पूर्वोक्तानुसारेण नित्यलीलासम्बन्धिन्यः सर्वा अपि रात्रयो नित्यतया वस्तुतो वर्तमानाः सन्तीति स्वीकरणं निर्दोषलेशमित्यवश्यं मन्तव्यमेव ।

**पूर्वपक्षी**—यदि लीलाः लीलासमयश्च द्वावपि नित्यौ चेत्, लीलावर्णनप्रकरणे वर्तमानानां **'एष्यामि ते गृहं सुभ्रूः' 'आयास्य इति दौत्यकैः'** इत्यादीनां वचनानामनौचित्यं सिद्ध्यति, यत एतेषु 'एष्यामि' 'आयास्य' इत्यादयो भविष्यद्वाचकाः शब्दा लीलानां बोधाय प्रयुक्ताः सन्ति । नित्यतया सर्वदा वर्तमानाश्चैता गमनागमनादिलीला भविष्यन्त्यः सन्तीति न वक्तुं शक्यते ।

**सिद्धान्ती**—यद्यपि लीलाः लीलासमयाश्चेत्युभयेऽपि नित्यास्तथाप्येतेषामाविर्भावः क्रमेण भवति । अतो यस्या लीलाया आविर्भावो भक्तविशेषानुभवानुरोधाद् भावित्वेन बोधयितुमभिप्रेयते तस्या बोधे तदीयसमयबोधे च भविष्यद्वाचिनः शब्दाः सुखेनोपयोक्तुं शक्यन्ते । एतेन लीलाः लीलासम्बन्धिसमयाश्चानित्या इति न सिद्ध्यति ।

**पूर्वपक्षी**—यस्या लीलाया आविर्भावो भावित्वेन बोधयितुमभिप्रेयते, सा तदानीं भक्तैरनुभूयमानाऽस्ति, न वा ? । यदि अनुभूयमाना चेत्, तस्या आविर्भावो भावित्वेन किमर्थं बोध्यते । यदि अनुभूयमाना न चेत्, अनित्यैवेति सिद्धम्, यतो भक्तान् विना लीला न भवितुमर्हति । लीलायां संमिलिता अपि भक्ता लीलां नानुभवन्तीति च न वक्तुं शक्यम् ।

**सिद्धान्ती**—भगवतोऽनन्तलीलाः सन्ति । सर्वैरपि भक्तैर्यथाऽधिकारं भिन्नभिन्ना लीला अनुभूयन्ते । यां लीलां केचन भक्ताः साम्प्रतमनुभवन्ति, तामेव साम्प्रतमपरे नानुभवन्ति । एवं च ये नानुभवन्ति, तेऽनुभवक्रमप्रसिद्ध्या तां भाविनीं भूतां वाऽवश्यं मंस्यन्त एव । अतस्तद्बुद्ध्यनुसारेण बोधके शास्त्रेऽपि 'एष्यामि' 'आयास्ये' इत्यादीनां भविष्यद्वाचिनां शब्दानां प्रयोगो न दुष्यति ।

**पूर्वपक्षी**—**'एष्यामि ते गृहं सुभ्रूः'** इति वचनं भगवता कुब्जां प्रत्युक्तमस्ति । एतद्बोध्या च कुब्जागृहगमनलीला । अस्या लीलाया मुख्यमालम्बनमपि कुब्जैव । अत इमां कुब्जा नानुभवतीत्यतो भाविनीं मन्यते, अन्या च काचनानुभवतीत्यतस्तदानीमपि वर्तमानेति न वक्तुं शक्यते । अतो लीला नित्या चेत्, 'एष्यामी'ति भविष्यद्वाचिशब्दप्रयोगोऽवश्यमयोग्य एव । एवमेव **'आयास्य इति दौत्यकैः'** इत्यादावपि ज्ञेयम् ॥

**सिद्धान्ती**—यथा भगवान् रसात्मकः, तथा एतदीयलीलाऽपि रसात्मिका । रसश्च यदा विभावानुभावव्यभिचारिभावा एकीभवन्ति, तदैवोदयते । औत्सुक्यनामा व्यभिचारिभावश्च **'एष्यामि ते गृहं सुभ्रूः'** इत्यादिभिर्भविष्यदागमनवादिभिर्वचनैरभिव्यज्यते, अत ईदृशानां वचनानामौत्सुक्यप्रभृतिव्यभिचारिभावाभिव्यञ्जनद्वारा रसपोषण एव तात्पर्यं, न तु कुब्जागृहगमनादीनां भावित्वबोधने । अस्तु वा भावित्वबोधन एव तात्पर्यं, तथापि भगवानिव भगवल्लीलाऽपि विरुद्धधर्माधिकरणमस्तीति तत्र वर्तमाने भविष्यत्त्वनित्यत्वे न परस्परबाधनं कर्तुं प्रभवतः । किञ्चेयं लीलानित्यता श्रुतिस्मृतिपुराणवचननिचयेन निर्णीताऽस्ति, न तु युक्तिभिः । अतो नात्र यौक्तिको दोषः प्रवेशं लभते ।

## इदानीन्तना भक्तजना अपि नित्यलीलाऽधिकारिणः ।

(५०) **पूर्वपक्षी**—नित्यलीलायां ये भक्ताः प्रथमत एव वर्तन्ते, तद्भिन्ना अधुनातना भक्ता अपि नित्यलीलायां प्रवेशं लभन्ते, न वा ? । लभन्ते चेत् लीलाऽनित्येति सिद्धम् । नहि कथमप्याधुनिकभक्तसम्बन्धिन्या लीलाया आधुनिकभक्तानां प्रवेशात्पूर्वमवस्थितिः संभवति । यदि प्रवेशं न लभन्ते चेत्, एतैस्तदर्थं विधीयमानः प्रयासो व्यर्थीभवति ।

**सिद्धान्ती**—**'स्त्रियो वा पुरुषो वाऽपि भर्तृभावेन केशवम् । हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशय'** इति बृहद्वामनपुराणवचने श्रुतिरूपगोपिकाभावसजातीय-

भावेन भगवन्तं भजतामाधुनिकभक्तानामपि नित्यलीलायां प्रवेशो भवतीति प्रतिपादितमस्ति, अत आधुनिकभक्तानां नित्यलीलाप्रवेशो न निषेद्धुं शक्यते । अपिच यथा कर्तृत्वसाधकानुमानबलेन तार्किकाः घटपटादिनानाऽनित्यवस्तुभिः सम्बद्ध्यमानमपि परमात्मनो ज्ञानं नित्यमिति मन्यन्ते, एवं **'जयति जननिवासः'** इत्यादिप्रमाणप्रभावेनेदानीन्तनभक्तजनैः सम्बद्ध्यमानाऽपि भगवल्लीला नित्येति वयं मन्महे । प्रमाणानुसारिणि निर्णये न युक्तिभिः किमपि विधातुं प्रतिषेद्धुं वा शक्यमिति नानित्यतासन्देह इह गृहीतावसरो भवितुं प्रभुः ।

वस्तुतस्तु भगवतो निरवग्रहेणानुग्रहेण निरन्तरमितरैः प्राक्तनभक्तजनैरनुभूयमानामेव लीलामधुनातना भक्तजना अप्यनुभवन्ति, न त्वेते भगवता काञ्चिदप्यभूतपूर्वामभिनवलीलामनुभाव्यन्ते । अतो मायावादिनां मते यथा नित्यसिद्धोऽपि मोक्षो महावाक्यप्रभवेन ज्ञानेन यतिभिर्लभ्यते, एवमस्मन्मते नित्यसिद्धाऽपि लीला गोपकुटुम्बिनीभावसजातीयभावेन भजद्भिराधुनिकभक्तैर्लभ्यत इति नानुपपत्तिः काचित् ।

## भगवतोऽनुग्रह एव लीलाऽनुभवलाभे हेतुः ।

**पूर्वपक्षी**—लीला परस्परं समानेष्वेव भवति, नत्वधिकनीचोच्चेषु । नहि नगराद्बहिर्वसन्ती चाण्डाली कथञ्चिदपि महीमहेन्द्रविहारसुखानुभवसौभाग्यभाजनं भवति । अतो नितान्तं तुच्छो जीवः सकललोकैकनायकस्य महेन्द्रमुखदेवदुर्लभपदारविन्दरेणुकणस्य भगवतोऽत्यन्तान्तरङ्गलीला अप्यनुभवतीति न कथञ्चिदपि शक्यवचनम् ।

**सिद्धान्ती**—यद्यपि जीवे नेदृशी योग्यतास्ति, यया नित्यलीलानुभवसौभाग्यं जीवो लभेत, यतः श्रुतीनामपि लीलाऽनुभवमनोरथं भगवान् **'दुर्लभो दुर्घटश्चैष युष्माकं सुमनोरथः'** इति वचनेन दुर्लभ इति वदति, परन्तु सर्वत्रापरतन्त्रवाञ्छितं हि भगवतश्चेष्टितम् । यदि भगवानिच्छेच्चेद्, नितान्तं नीचमपि निजान्तरङ्गतमलीलामनुभावयेत्, नो चेत्, सर्वविधसाधनसंपन्नं योग्यमपि जीवं नानुभावयेत् । अतो नित्यलीलाऽनुभवलाभे केवलं भगवतोऽनुग्रह एव हेतुर्नतु साधनसम्पन्ना जीवानां योग्यता । अत एव श्रुतीनां नित्यलीलाऽनुभवमनोरथं दुर्लभमित्युक्त्वाऽनन्तरं **'मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति'** इति वचने निजानुमोदनेन तन्मनोरथस्य साफल्यं निरूपितम् ।

किञ्च गीतायां भगवता **'ये यथा मां प्रपद्यन्ते ताँस्तथैव भजाम्यहम्'** इति प्रतिज्ञातमस्ति, अतो ये लीलाऽनुभवसौभाग्यलाभाशया व्रजवधूभावसजातीयभावेन भगवन्तं भजिष्यन्ति, तान् भगवानपि तथा भावेन भजिष्यति अनुगृहीष्यति । अतो मार्यादिकविचारेणापि तेषां नित्यलीलायां प्रवेशो निश्चित एव ।

किञ्च **'ध्रुवासो अस्य कीरयो जनासः'** इति ऋग्वेदमन्त्रे **'ध्रुवासः'** इति पदेन

स्तुतिकर्तारो भक्ता ध्रुवा नित्या इति प्रतिपादितमस्ति । यदि स्तुतिकर्तॄणां भक्तानां नित्यलीलायां प्रवेशो न भवेत्, कथमिदं संभवेत्, यतो जीवानां नित्यता नानाश्रुतिभिरसकृद् घुष्यमाणा वर्तत इति तत्प्रतिपादनस्येह वामनावतारवर्णनप्रसङ्गे प्रयोजनं नास्ति । इह तु सशरीराणां भक्तजीवानां नित्यता निरूप्यते । सा चेयं नित्यलीलातोऽन्यत्र न संभवति । अतो व्रजवधूभावसजातीयभावेन भजतां भक्तानां नित्यलीलायां प्रवेशोऽवश्यं स्वीकार्य एव ।

## क्रमेणानुभूयमाना अपि लीला नित्याः ।

**पूर्वपक्षी**—भक्तैर्लीलाः क्रमेणानुभूयन्त इति भवद्भिः पूर्वं निरूपितं, परन्तु क्रमः सर्वत्रोत्पत्तिमत्सु वस्तुष्वेव विलोक्यते, उत्पत्तिमन्ति वस्तूनि चानित्यानि भवन्ति, अत एता लीला अप्यनित्या इत्यनुमानबलेन सिद्ध्यति ।

**सिद्धान्ती**—भगवतो नित्यसिद्धा एव लीलाः क्रमेणाविर्भवन्ति, अतो भक्तैरपि क्रमेणानुभूयन्ते, परन्त्वेतावता एता अनित्या इति न सिद्ध्यति ।

**पूर्वपक्षी**—लौकिकपदार्थानां य आविर्भावो भवद्भिः स्वीक्रियते, सोऽस्माभिरुत्पत्तिरित्युच्यते, अतोऽयं लीलानामाविर्भावोऽपि तथैवेति लीलानां जन्यता सिद्ध्यत्येव । अत एवाऽनित्यताऽपि ।

**सिद्धान्ती**—प्रापञ्चिकपदार्थानां नित्यलीलासम्बन्धिनां च स्वरूप एव महदन्तरं विद्यते, अत उभयेषामाविर्भावौ न समानस्वरूपौ भवितुमर्हतः । किञ्च प्रापञ्चिकपदार्थानां नित्यलीलासम्बन्धिनां च स्वरूपे अन्तरं न चेत्, पूर्वं जातेन प्रपञ्चनित्यताप्रमाणीकरणेनैव सन्तोषात् पुनरिदं लीलानां नित्यतानिरूपणं निरर्थकं स्यात् । अतो लौकिककर्तॄणां प्रयत्नस्यानित्यत्वेऽपि यथा प्रमाणबलेनेश्वरप्रयत्नो नित्य इति स्वीक्रियते, एवं प्रमाणबलेन तल्लीलाऽपि नित्येति स्वीक्रियताम् ।

**पूर्वपक्षी**—यदि सर्वा अपि भगवल्लीला नित्याः—सर्वदा वर्तमानाश्चेत्, क्वचन, प्रातःकालिकलीला सायङ्कालेऽपि वर्तमानास्ति, बाल्यलीला कैशोरदशायामप्यस्तीति निरूप्येत, परन्तु नैवंविधं निरूपणं क्वापि दृष्टचरम् । अतो लीला नित्या इति कथमिव श्रद्धीयतां जनैः ।

**सिद्धान्ती**—सत्यम्, नेदृशं दृश्यते क्वापि निरूपणम्, परन्तु प्रातःकालिकलीला सायङ्काले नास्ति, बाल्यलीला च कैशोरदशायां नास्तीत्येवंविधो निषेधोऽपि न क्वचन दृष्टचरः । अत एता लीला अनित्या इत्यपि कथमिव निश्चीयताम् । किञ्चैता लीला नित्या इत्यनेकवचनानि प्रमाणीकुर्वन्ति, अत एतदेव कुतो न स्वीक्रियते यद्भगवल्लीलाः सर्वा अपि नित्यतया सर्वदा विद्यमानाः सन्ति, परन्तु भक्तैरेताः क्रमेणानुभूयन्ते, न तु युग-

पत् । अतः पूर्वपूर्वलीलाऽनुभवकाले उत्तरोत्तरलीला नानुभूयन्ते, उत्तरोत्तरलीलाऽनुभवकाले च पूर्वपूर्वलीला नानुभूयन्ते तैरेव भक्तैः । अत एव शास्त्रमपि नैवं वर्णयति । किञ्चैकत्र लीलाप्रसङ्गे निरूपिता लीलानित्यताऽपरत्रापि लब्धावकाशेति न सर्वत्र तन्निरूपणमावश्यकम् । अतो लीला नित्येति निःसंशयमेव ।

**पूर्वपक्षी**—अनायासेन क्रियमाणं कर्म 'लीला'-शब्देनोच्यते । कर्म च तृतीयक्षणे प्रणश्यतीति सर्वसम्मतो नियमः । अतो लीलाया अपि प्रणाशस्तृतीयक्षणेऽवश्यं स्वीकरणीय एवेति नित्यता नितान्तमशक्यवचनैव वर्तते ।

**सिद्धान्ती**—यथा कर्म तृतीयक्षणे प्रणश्यतीति नियमः, तथा ज्ञानमपि तृतीयक्षणे प्रणश्यतीति नियमः । तत्कुतः परमात्मनो ज्ञानं नित्यमिति भवद्भिः स्वीक्रियते । यदि प्रमाणपरवशतया नियममुल्लङ्घ्यापि तथा स्वीक्रियते चेत्, प्रमाणबलेनैवेहापि लीला नित्येति स्वीक्रियताम् ।

## प्रभासे कृता लीला मायिकी ।

( ५३ ) **पूर्वपक्षी**—सर्वा अपि भगवल्लीला नित्याश्चेत्, प्रभासे भगवता या शरीरत्यागलीला कृता सापि नित्यैव स्यात् ? ।

**सिद्धान्ती**—भगवतः शरीरं न मनुष्यशरीरवत्पञ्चमहाभूतनिर्मितं प्राकृतं, किन्तु सच्चिदानन्दमयमात्माऽभिन्नमप्राकृतमस्ति, यतो गीतायां भगवता **'यस्यान्तःस्थानि भूतानि'** इति वचनेन विश्वाधारता ब्रह्मणो लक्षणमिति यदुक्तं, तदेव मृद्भक्षणावसरे स्ववदनारविन्दे सर्वमपि विश्वं प्रदर्श्य सत्यापितम् । किञ्च दामोदरलीलाप्रसङ्गे बन्धनरज्ज्वा द्व्यङ्गुलन्यूनतावर्णनेन श्रीकृष्णशरीरस्य याऽपरिच्छिन्नता निरूपिता, साऽपि श्रीकृष्णशरीरं ब्रह्मस्वरूपमिति प्रमाणीकरोति, यतः **'सत्यं ज्ञानमनन्तं ब्रह्म'** इति श्रुतिरनन्तपदेनापरिच्छिन्नता ब्रह्मधर्म इति वक्ति । अत एवंविधस्य ब्रह्मात्मकशरीरस्य त्यागः सर्वथा न संभवति । किञ्च प्रभासीयलीलावर्णने श्रीकृष्णेन शरीरं त्यक्तमिति न क्वचिदपि प्रतिपादितमस्ति । अतः श्रीकृष्णशरीरत्यागलीला नित्यास्ति न वेति शङ्कैव व्यर्था ।

**पूर्वपक्षी**—**'योगधारणयाऽऽग्नेय्या दग्ध्वा धामाविशत्स्वकम्'** इति प्रभासीयप्रसङ्गवर्तिनि वचने श्रीकृष्णो योगाग्निना शरीरं दग्धवानिति व्यक्तमेव प्रतिपादितमस्ति । अतो दामोदरलीलामृत्स्नाभक्षणलीलोदाहरणप्रदर्शनेन श्रीकृष्णशरीरं ब्रह्मात्मकं सच्चिदानन्दमयमिति प्रमाणीकरणस्य प्रयासो विफल एव ।

**सिद्धान्ती**—श्रीधरस्वामिप्रभृतयः सर्वेऽपि प्रसिद्धव्याख्यातारः उक्तवचने 'अदग्ध्वे'ति पदं छित्त्वा श्रीकृष्णः सहैव स्वविग्रहेण स्वधाम जगामेत्यर्थमङ्गीकुर्वन्ति, अतोऽत्र देहत्यागार्थप्रतिपादनसंभावनं भ्रम एव ।

**पूर्वपक्षी**—उक्तवचने तु व्याख्याकाराणा'मदग्ध्वे'ति पदच्छेदकौशलमाहृत्य देहत्यागोक्तिः कथञ्चन प्रतिषेद्धुं शक्येत, परन्तु **'ययाऽहरद्भुवो भारं तां तनुं विजहावजः'** इति प्रथमस्कन्धे वर्तमानायामर्जुनोक्तौ तु 'तनुं विजहा'विति व्यक्तमेव शरीरत्याग उक्तोऽस्ति। नापि चेह पदच्छेदविच्छित्तिवैभवेन केनापि विघ्नतिकृता विपरीतोऽर्थः प्रदर्शितोऽस्ति। अत एतदनुसारेण त्ववश्यं श्रीकृष्णदेहत्यागः स्वीकर्तव्य एव।

**सिद्धान्ती**—**'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा। तथा प्राकृतदेहत्वं देहत्यागादिकं तथा। असुराणां विमोहाय दोषा विष्णोर्नहि क्वचित्'** इति ब्रह्मपुराणवचनेन, अज्ञत्व—पारवश्य—वेदविरुद्धाचार—प्राकृतदेहता—देहत्यागादयो दोषा भगवताऽऽसुराणां विमोहाय स्वस्मिन् प्रदर्श्यन्ते, न तु वस्तुतस्ते तत्र सन्तीति निरूपितमस्ति। अतः प्रादुर्भावावसरे यथा **'बभूव प्राकृतः शिशु'**रिति प्राकृतशिशुताप्रदर्शननाट्यं, तथेदं प्रभासे देहत्यागप्रदर्शननाट्यमिति मायिकमित्येव स्वीकर्तुं शक्यते। अत एव व्याख्याकारैरपि 'योगधारणयाऽऽग्नेय्ये'ति वचने अदग्ध्वेति पदच्छेदः कृतः। किञ्च **'ययाऽहरद्भुवो भार'**मिति वचने भूभारहरणं येन कृतं, तदेव शरीरं भगवता त्यक्तमित्युक्तं, न तु व्रजाङ्गनानुग्रहाद्या अन्यलीला येन कृतास्तच्छरीरं त्यक्तमित्युक्तम्। एतेनापि आन्तरालिकसृष्टिरूपं मायिकं स्वरूपं, यत्र जनानां प्राकृतमेतदिति मतिरुत्पद्यते तदेव त्यक्तं, न तु मूलरूपं व्यूहरूपं वेति सिद्ध्यति।

## प्रभासे मायिकयादवकुलं नष्टं, न तु लीलाप्रविष्टयादवकुलम्।

(५६) **पूर्वपक्षी**—पूर्वोपन्यस्तब्रह्मपुराणवचनेन केवलं श्रीकृष्णशरीरत्यागलीला मायिकीति प्रमाणीक्रियते। प्रभासीयप्रसङ्गे तु ये यादवा नित्यलीलासम्बन्धिन इति भवद्भिः स्वीक्रियते, तेषामपि प्रणाशः **'संजह्रे स्वकुलं विभु'** रितिवचनेन प्रतिपाद्यते। अतो लीला नित्येति तु भूयोऽपि न सिद्ध्यति।

**सिद्धान्ती**—'संजह्रेऽस्वकुल'मित्यत्र 'स्वकुल'मिति पदच्छेदो नास्ति, किन्तु 'अस्वकुल'मित्यस्ति। अत एतेन यादवकुलाद्भिन्नस्य मायिककुलस्य संहारः कृत इत्येव प्रमाणीक्रियत इति नैतेन नित्यलीलायां काऽपि बाधा भवितुमर्हति।

**पूर्वपक्षी**—**'संजह्रे स्वकुलं विभु'**रिति वचने तु न मायाया नामापि गृहीतमस्ति, तत्पुनरयं मायिककुलस्य संहारः कृत इत्यर्थो न जाने भवद्भिः कुत आहृतः। किञ्चात्रैकत्र वचने 'अस्वकुल'मिति पदच्छेदेन विरुद्धोऽर्थः संभवेदपि, परन्तु यादवकुलसंहारवाचीनि **'यदून्यदुभिरन्योन्यं भूभारान् सञ्जहार ह'** **'संहर्तुमैच्छत कुलम्'** इत्यादीन्यन्यवचनान्यपि सन्ति। एषु च न सर्वत्र विपरीतोऽर्थो भवितुमर्हति। अतो यादवकुलविलयो जात इति त्वेतैः प्रमाणितं भवत्येव।

( ५३ ) सिद्धान्ती—**'राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य'** इति वचनेन भगवाञ्छुकाचार्यो यादवानामुत्पत्तिनाशौ केवलं मायया प्रतीयेते, वस्तुत एतौ नेति कथयति । किञ्च 'संहर्तुमैच्छत कुल'मिति वचने तु कश्चन यादवकुलवाची शब्द एव नास्ति, केवलं 'कुल'-शब्दप्रयोगो विद्यते, अत एतेन यादवकुलनाशो न प्रमाणीकर्तुं शक्यते । केवलं **'यदून्यदुभिरन्योन्यं भूभारान् सञ्जहारे'**ति वचने 'यदु'-शब्दोपादानेन यदुकुलविलयः प्रतिपाद्यत इति भ्रमो भवति । सोऽयं 'राजन् परस्ये'त्युपर्युक्तवचनेन मायिकतां ज्ञात्वा निवर्तनीयः ।

**पूर्वपक्षी—'राजन् परस्य तनुभृज्जननाप्ययेहाः'** इति वचनस्य विवरणे श्रीधरस्वामिना 'तनुभृत्सु यादवादिषु भगवत आविर्भावतिरोभावचेष्टाः' इति व्याख्यातमस्ति । अत एतेन यादवेषु भगवत आविर्भावतिरोभावौ मायिकाविति सिद्ध्यति, न तु यदुकुलविलयो मायिक इति ।

**सिद्धान्ती**—यादवेषु भगवानाविर्भूतोऽस्तीति तु आपामरं प्रख्यातमेव । अतः 'तनुभृत्सु यादवादिषु भगवत आविर्भावतिरोभावचेष्टे'ति व्याख्याने कृते 'तनुभृज्जननाप्ययेहा' इति पदे यादववाचि-'तनुभृ'च्छब्दो निष्प्रयोजन इति प्रमाणितं भवति । 'भगवत' इति षष्ठ्यन्तपदं चाधिकमध्याहरणीयं भवति । किञ्चायमेवार्थः शुकाचार्याणां विवक्षितश्चेत्, 'तनुभृज्जननाप्ययेहाः' इत्यनुक्त्वा 'भगवज्जननाप्ययेहा' इति वदेयुः । अतः तनुभृतां यादवानामुत्पत्तिनाशचेष्टेत्यक्षरार्थं मनसि धृत्वा योऽस्य वचनस्य यादवकुलविलयमायिकताप्रमाणीकरणायोपन्यासः कृतः, स समुचित एव ।

( ५५ ) किञ्च केवलमेतेनैकेनैव वचनेन न यदुकुलविलयस्य मायिकता प्रमाणीक्रियते, अपितु **'मन्मायारचनामेतां विज्ञायोपशमं व्रज' 'नश्वरं गृह्यमाणं च विद्धि मायामनोमय'**मित्यादिभिरन्यैरपि बहुभिर्वचनैः प्रमाणीक्रियते ।

**पूर्वपक्षी—'नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्'** इति वचनेन न केवलं यदुकुलमेव मायामयमित्युच्यते, अपि तु सर्वं जगन्मायामयमित्युच्यते, यतोऽस्य पूर्वार्द्धे 'यदिदं मनसा वाचे'ति निखिलवस्तुवाचक 'इदं'-शब्दः प्रयुक्तोऽस्ति, न तु यदुकुलवाचकः शब्दविशेषः ।

**सिद्धान्ती**—यद्यपीह वचने यदुकुलवाची शब्दो नास्ति, परन्तु जगतो मायिकतास्वीकरणं नानाश्रुतिस्मृतियुक्तिभिर्विरुद्ध्यते, प्रभासीयप्रसङ्गश्चेह सन्निहितोऽस्ति, अतः प्रभासीयं यदुकुलमेव मायामनोमयमनेन वचनेन वक्तुं शक्यते, न तु सर्वं जगत् ।

( ५६ ) **पूर्वपक्षी**—नित्यलीलाभूमौ द्वारकायां ये यादवा आसँस्त एव भगवतो निदेशेन प्रभासमयासिषुः तत्र च परस्परप्रहारैः सर्वेऽपि प्राणाँस्तत्यजुरिति श्रीमद्भागवते निरूप्यते । अत एतद्विरोधेन मध्य एव मायिकयदुकुलं न कल्पयितुं शक्यते ।

**सिद्धान्ती**—**'ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम्'** इति वचनेन राजा परीक्षित्, यादवा विप्रशापायोग्याः, यतस्ते विप्राणां भक्ताः, दानवीराः, वृद्धानामुपासकाः, श्रीकृष्णचरणानुरागिण इत्यवोचत् । भगवान् शुकाचार्यश्च **'गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः'** इति वचने यादवा भगवद्बाहव इत्युपदिदेश । परन्तु भगवान् स्वयं **'यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम्'** इति वचनेन यादवकुलमुद्धतम्, उद्धवश्च **'दुर्भगो बत लोकोऽयम्'** इत्यनेन दुर्भगं जगाद । अत इमान्युभयान्यपि वचनानि परस्परविरुद्धानि । न हि ब्रह्मण्यतादिगुणपूर्णा भगवद्बाहुस्वरूपा यादवा दुर्भगा उद्धता वा भवितुमर्हन्ति । अतोऽनेन ब्रह्मण्यतादिगुणपूर्णा भगवद्बाहुस्वरूपा ये यादवास्त एव नित्यलीलासम्बन्धिनो वास्तविकयादवाः, यांश्च भगवानुद्धत इति, उद्धवश्च दुर्भग इति वदति, ते नित्यलीलासम्बन्धिषु वास्तविकयादवेषु भूतावेशन्यायेनाविष्टा भगवन्मायाकल्पिता यादवा इति निश्चीयते । प्रभासक्षेत्रे चैषामेव भगवन्मायाकल्पितानां यादवानां विनाशो जातो, न तु नित्यलीलासम्बन्धिनां भगवद्बाहुस्वरूपाणां यादवानाम् । उद्धवेन च **'स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु'** इति वचनेन या स्नेहविच्छेदप्रार्थना कृता, साऽपि प्रणाशिनो यादवकुलस्य मायिकतां ज्ञात्वैव कृतेति ज्ञायते । आचार्यचरणैरपि तत्त्वदीपे भागवतप्रकरणे **'बलवद्रुक्मिणीमुख्या नाट्यं सर्वमिहोदितम्'** इति वचनेन प्रभासीयलीला नाट्यमित्युपदिशद्भिर्मायिकतैव प्रभासीययदुकुलविलयस्य व्यक्तीक्रियते । अतो भगवतो देहत्यागवद् यादवानामपि देहत्यागो मायिकनाट्यमेवेति मन्तव्यम् ।

**पूर्वपक्षी**—प्रभासीयप्रसङ्गे न केवलं यादवानां देहत्याग एव वर्ण्यते, अपि तु देहत्यागोत्तरं यादवयुवतिभिः स्वस्वभर्तुः शवशरीरमादाय चिताऽऽरोहणं कृतं, पार्थेन च सर्वेषामौर्ध्वदैहिकं कर्म कारितमित्यपि प्रतिपाद्यते । यदि यादवदेहानि मायिकानि चेद्, नैतैः सह युवतीनां चिताऽऽरोहणं संभवेत्, नाप्यौर्ध्वदैहिककर्मणः काऽप्यावश्यकता सिद्ध्येत् । अत एतदनुरोधेन वास्तविकयादवानामेव विलयः स्वीकार्यः प्रभासे ।

**सिद्धान्ती**—विना चिताऽऽरोहणमौर्ध्वदैहिकं च मायिकयादवदेहत्यागलीलानाट्यं न पूर्णं संपद्यते, नाप्यासुराणां मोहः पूर्णतया कर्तुं शक्यते । यथा च भगवतो भक्तानुग्रहणं लीला, तथाऽऽसुरमोहजननमपि । अत एतदर्थं भगवता चिताऽऽरोहणादिव्यवहाराः सर्वेऽपि कारिताः ।

## प्रभासीयलीला मायिकीति कथं स्पष्टं नोक्तमित्यत्र हेतुः ।

**पूर्वपक्षी**—प्रभासीयलीला मायिकीति प्रमाणीकर्तुं यानि भागवतवचनानि पूर्वमुक्तानि तेषु नैकमपि वचनमेवंविधमस्ति, यद् विना विशेषविवरणसाहाय्यं स्पष्टतया प्रभा-

सीयलीला मायिकीति प्रमाणीकुर्यात् । यदीयं लीला वस्तुतो मायिकी चेद्, भगवान् शुकाचार्यः स्पष्टमेनां मायिकीति वदेत् । नेह निगूढकथनमावश्यकमस्ति । अतो भागवतानुसारेण तु प्रभासीयलीला मायिकीति न वक्तुं शक्यते ।

**सिद्धान्ती**—भगवान् स्वयमप्यात्मनः परिचयं न सर्वेभ्यो वितरितुं वाञ्छति, प्रत्युत स्वात्मपश्यानां जनानां बुद्धिविपर्ययसम्पादनाय प्रभासीयलीलासदृशानि नाट्यानि प्रदर्शयति, तत्कथमिवैतदीयाभिप्रायस्य विद्वाँसः शुकाचार्यसदृशा महात्मान एतत्स्पष्टं वदेयुः । तथापि सावधानं निरीक्षिते प्रभासीयलीला मायिकीति विषये पर्याप्तानि प्रमाणानि लभ्यन्ते । तथाहि भगवल्लीलानिरूपणपरस्य दशमस्कन्धस्य प्रारम्भ एव **'अन्तर्बहिः पूरुषकालरूपैः । प्रयच्छतो मृत्युमुतामृतं चे'**ति वचने भगवान् कालरूपेण संसारं, पुरुषरूपेण मोक्षं ददातीत्युक्तमस्ति । एतेन, भगवान् कालरूपेण या लीलाः करोति ताः संसारप्रदाः, पुरुषरूपेण याः करोति ता मोक्षप्रदा इति सिद्ध्यति । पुनः प्रभासीयलीलाप्रारम्भे च **'कालात्मना निवसता यदुदेवगेहे पिण्डारकं समगमन् मुनयो निसृष्टाः'** इति वचनेन यदुवंशविनाशकशापदातारो मुनयो भगवतः कालात्मनः प्रेरणया पिण्डारकक्षेत्रमगमन्निति निरूपितमस्ति । अतो यदुवंशशापादारभ्य भगवत्तिरोभावपर्यन्ताः सर्वा अपि लीलाः संसारप्रदाः सन्तीति स्वीकर्तव्यमेव । संसारजननं च मोहोत्पादनद्वारा भवति । मोहश्च याः स्वयं मिथ्या सन्ति, परस्य च वास्तविकं स्वरूपं प्रच्छादयन्ति, तत्र विपरीतमतिमुत्पादयन्ति वा, ताभिः कर्तुं शक्यते । तस्मात्संसारप्रदानां प्रभासीयलीलानामपि स्वरूपमीदृशमेवेति सिद्ध्यति । एवमियमेतावदुक्तिरपि प्रभासीयलीलाया मायिकीत्वं मिथ्यात्वं च प्रमाणीकर्तुं पर्याप्ता वर्तते, तथापि **'राजन् परस्य तनुभृज्जननाप्ययेहाः'** इत्यादिभिः कतिपयवचनैर्मध्येऽपि प्रभासीयलीलाया मायिकीत्वं प्रतिपादितमस्ति । तदितोऽप्यधिकं विरलाधिकारिवेद्यमर्मणि विषये किं वाच्यं भवेत्? । किञ्च **'अज्ञत्वं पारवश्यं चे'**त्यादीनि पूर्वं प्रदर्शितानि ब्रह्मपुराणवचनानि तु आपामरप्रत्येयपद्धत्या स्पष्टमेवैवंविधलीलानां मायिकीत्वं मिथ्यात्वं चोद्घोषयन्तीति नासन्तोषलेशेनापि शक्यमवस्थातुम् ।

**पूर्वपक्षी**—भगवान् कालात्मना या लीलाश्चक्रे ताः सर्वा अपि मिथ्येति नियमो न भवद्भिर्मन्तुं शक्यते, यतो गोवर्द्धनलीला वास्तविकी नित्येति भवतां संमतम् । सा चेयं गोवर्द्धनलीला भगवता कालात्मना कृतास्तीति **'कालात्मना भगवता'शक्रदर्पं जिघांसते'**ति वचनेन प्रमाणीक्रियते ।

**सिद्धान्ती**—'कालात्मना भगवते'ति वचने तु केवलमिन्द्राभिमानभङ्गो भगवता कालात्मना कृत इति निरूपितमस्ति, न तु सर्वाऽपि गोवर्द्धनलीला कालात्मना कृतेति ।

वस्तुतः 'कालात्मना' 'जिघांसता' इति विशेषणद्वयीयुतस्य 'भगवते'ति पदस्योत्तरार्द्धस्थितेन 'प्रोक्त'मिति पदेन सहान्वयोऽस्ति । अतो नन्दादीन् प्रति यद्वचनमुक्तं तत्कालात्मनोक्तमित्येवास्य वचनस्यार्थो, न तु गोवर्द्धनलीला कालात्मना कृतेत्यर्थः । इत्थं च पूर्वोक्तनियमस्वीकारे न काचिदप्यापत्तिः ।

## सिद्धान्तस्योत्कर्षः, अधिकारिणश्च ।

**पूर्वपक्षी**—गिरामौपनिषदीनां स्मार्तपौराणीनां च, ब्रह्म निखिलकल्याणगुणपरीणाहि साकारञ्च, अतुच्छः प्रपञ्चः, जीवा अणवः, श्रीकृष्णभक्तिरेव परमधर्मः, अतिशयिततदीयदयया वृन्दावनादिषु नित्यलीलास्थलेषु तेनैव सह सततमप्राकृतांतरङ्गतल्लीलाऽनुभवसौभाग्यलाभ एव सर्वेषां जीवानां सदा स्पृहणीयतमं दयितं फलमिति भवदुदिताः सिद्धान्ताः सर्वांशेन सम्मताश्चेत्, कुतो न सर्वोऽपि श्रद्धात्येतानास्तिकजनः। यदि च न श्रद्दधाति चेत्, किमनेन वः प्रयासेन, येषां मतिर्विनोचिततमोपपत्तीरपि भवतामिव स्वतः स्वभाववैभवेन श्रद्दधाति, न तेष्वल्पमपि प्रयाससाफल्यं शक्यसंभावनम् । ये च श्रद्धाविधुराः समर्थोपपत्तिपरतन्त्रमनोनिवेशा वा, ते तु भवादृशविदुषा दर्शितेन नोपपत्तिशतेनाप्यावर्जनीयश्रद्धा इत्युदग्रोऽयं सिद्धान्तसमर्थनपरिश्रमस्तेष्वपि विफल एव । किञ्च सर्वोऽप्यास्तिकजनोऽत्र न श्रद्दधातीतीदमपि सिद्धान्तस्वरूपापकर्षनिबन्धनमित्येव वक्तुं शक्यते ।

**सिद्धान्ती**—विशिष्टता प्रामाणिकता वा सिद्धान्तस्य प्रमाणशुद्धिनिबन्धना, न तु विशेषसंख्यकजनादरसव्यपेक्षा । नापि कश्चिदेवंविधःसिद्धान्तोऽस्ति जगति यः सर्वेषामेकान्तेन समानादरभाजनं भवेत् । अत आदरकर्तॄणां न्यूनतयैव न वक्तुं क्षमः सिद्धान्तस्वरूपे कश्चिदप्यपकर्षः । सत्त्वादिगुणभेदभिन्नस्वभावानुसरणः प्राकृतो जनः सात्त्विकं, राजसं, तामसं वा कञ्चिदेकं स्वानुरूपं सिद्धान्तमनुसरति, न सर्वान् । अयमस्मत्प्रतिपादितसिद्धान्तश्च सात्त्विकोऽस्ति, अतः सात्त्विकानां श्रद्धाभूमिरयं भवति, नान्येषाम् । परन्त्वेतावता न शक्यं सिद्धान्तस्वरूपमपकृष्टमिति वक्तुम्, यतस्तेषां श्रद्धाविरहे तदीयायोग्यतैव हेतुः । यथा काञ्चनकृता मणिविशेषेण धातवः काञ्चनीक्रियन्ते, न तु प्रस्तराः, परन्तु नैतेन मणेस्तत्र सामर्थ्यावग्रह इति प्रतिपद्यते, अपि तु प्रस्तराणामयोग्यतैवेति, एवं सात्त्विकजीवैकसंग्रहणीयोऽयमस्मत्सिद्धान्तो यदि राजसतामसजीवेभ्यो नाभिरोचते चेत्, नैतेनास्यावरुध्यत उत्कर्षः, अपि त्वयोग्यतैव तेषामिति निश्चीयते। अयं प्रयासस्तु सात्त्विकानां रुचिरपीतरपरिचयवशाद्विपर्यस्ता मा भवत्वित्येतदर्थमस्तीत्युपपन्न एव ।

